का विशेष प्रकार का व्यापार है जिससे होने वाले फल या क्रिया को सम्पन्न करने में सहायता मिलती है। इसे एक उदाहरण से स्पष्ट किया जा सकता है।

**भावनाओं का लौकिक उदाहरण**—यज्ञदत्त नाम का व्यक्ति अपने पुत्र देवदत्त को गाय लाने का आदेश देता है—'गामानय'–गाय लाओ। इसके फलस्वरूप देवदत्त के मन में इच्छा उत्पन्न होती है कि उसे एक निश्चित क्रिया करनी है जिससे गाय आ सके। वह इस इच्छा को कार्यरूप में परिणत करता है और गाय ले आता है। इस कार्य को दो दृष्टियों से देखने पर दोनों प्रकार की भावनायें स्पष्ट हो जाती हैं।

प्रथमतः यज्ञदत्त चाहता है कि एक निश्चित प्रवृत्ति उसके पुत्र देवदत्त में हो। इस प्रसंग में यज्ञदत्त भावयिता है क्योंकि यह अपने पुत्र में प्रवृत्ति का प्रेरक है। देवदत्त की प्रवृत्ति ही यहाँ 'भवितृ' ( भविता ) है, अर्थात् वह विषय है जिसे उत्पन्न होना है। चूँकि भविष्य में होने वाली प्रवृत्ति ( भवितृ ) की, उत्पत्ति के अनुकूल ( भवनानुकूल ) भावयिता का व्यापार-विशेष ही भावना है, अतः प्रस्तुत उदाहरण में यज्ञदत्त में रहने वाला अभिप्रायविशेष जिससे देवदत्त को गाय लाने में प्रेरणा मिलती है, और जिसे 'देवदत्त, गाम् आनय' आदि शब्दों में अथवा संकेत आदि अन्य उपायों से व्यक्त किया जा सकता है, भावना हुई। भले ही यज्ञदत्त का अभिप्राय शारीरिक न होकर मानसिक हो, तथापि वह अभिप्राय या व्यापार तो है ही, अतः उसकी प्रवृत्ति, व्यापार या अभिप्राय को व्यापारविशेष तो कहा ही जा सकता है। इस दृष्टिकोण से देवदत्त को एक निश्चित कार्य के लिये प्रवृत्त करने हेतु यज्ञदत्त की प्रवृत्ति भावना हुई।

इसी प्रसंग को देवदत्त की स्थिति से भी आँका जा सकता है। देवदत्त भी चाहता है कि गाय का आनयन रूप कार्य सम्पन्न होना चाहिये। इस दशा में देवदत्त भावयिता हुआ, गाय का आनयन भविता हुआ, और देवदत्त की गवानयन के अनुकूल प्रवृत्ति भावना हुई। देवदत्त की यह प्रवृत्ति उसकी उस इच्छा से भिन्न कोई वस्तु नहीं है जो गवानयन ( अर्थात् उसके शरीर के आसन से उठने, बँधी हुई गाय की ओर जाने, उसे खोलने और अपेक्षित स्थान की ओर खींच लेने ) के अतिरिक्त कुछ नहीं। इस दृष्टि से गवानयन के सन्दर्भ में देवदत्त की प्रवृत्ति भी भावना ही हुई।

इस उदाहरण में यज्ञदत्त का अभिप्राय और देवदत्त की गवानयन की प्रवृत्ति दोनों भावना है। इनमें प्रथम शाब्दी या शब्द भावना है और दूसरी आर्थी या अर्थ भावना है।

**भावनाओं का वैदिक उदाहरण**—इनको एक वैदिक उदाहरण से भी स्पष्ट किया जा सकता है। 'स्वर्गकामो यजेत' इस वैदिक वाक्य से यह अभिप्राय निकलता है कि स्वर्ग को चाहने वाले व्यक्ति में एक निश्चित प्रवृत्ति हो—यज्ञ के प्रति प्रवृत्ति हो। यहाँ वैदिक वाक्य ही भावयिता हुआ और स्वर्गाकांक्षी पुरुष की प्रवृत्ति 'भवितृ'–होने वाली क्रिया–हुई। अतः यहाँ भावना हुई वैदिक वाक्यनिष्ठ अभिप्राय। वैदिक वाक्य के प्रसंग में कोई ऐसा व्यक्ति नहीं है जिसमें यह प्रवृत्ति निहित मानी जा सके। क्योंकि मीमांसा के सिद्धान्तानुसार वेदवाक्य अपौरुषेय एवं शाश्वत हैं। वे किसी भी पुरुष के द्वारा उच्चरित या रचित नहीं हैं। अतः इनके अनुसार यह प्रवृत्ति, अभिप्राय, व्यापार या भावना किसी पुरुष में न रहकर वैदिक वाक्यों में 'लिङ्' में रहती है। शब्दगत होने से ही इसको शाब्दी कहते हैं। लौकिक वाक्यों में वाक्य के उच्चारणकर्त्ता में ( परम्परया उसके शब्दों में ) यह अभिप्राय रहता है, अतः उसको शाब्दी कहते हैं। पुरुषनिष्ठ होने से इसको 'पौरुषेयी' आदि भी कहा जा सकता था, किन्तु यह लक्षण वैदिक विधियों में अव्याप्त होता, और दोषपूर्ण हो जाता, क्योंकि वैदिक वाक्य पौरुषेय नहीं हैं, वहाँ इसकी अभिव्यक्ति शब्दों–लिङ्–से होती है, अतः इसको शाब्दी भावना कहा जाता है। वेद के समक्ष मीमांसक लौकिक वाक्यों को महत्त्व नहीं देते, अतः वेदों के साथ घटित होने वाले लक्षण को ही वरीयता देते हैं।

इस वैदिक वाक्य को स्वर्ग के इच्छुक व्यक्ति के सन्दर्भ में भी देखना चाहिये। यह पुरुष भी चाहता है कि उसे स्वर्ग की प्राप्ति हो। अतः स्वर्गकामी पुरुष हुआ भावयिता, स्वर्ग की प्राप्ति हुई

भवितृ ( या भविता ), और भावना हुई इच्छुक पुरुष की वह प्रवृत्ति जो उसकी स्वर्गप्राप्ति का जनक होगी। यह प्रवृत्ति है पुरुष की यागसम्पन्न करने की इच्छा। अतः इस दृष्टिकोण से यागविषयक पुरुष की प्रवृत्ति ही भावना हुई। इसको आर्थी भावना कहते हैं—अर्थात्–'अर्थः प्रयोजनं स्वर्गप्राप्तिः इत्यर्थः, तत्सम्बन्धिनी भावना स्वर्गकामस्य यागविषया प्रवृत्तिः आर्थीभावना।'

इस प्रकार स्पष्ट हो जाता है कि जहाँ शाब्दी भावना से प्रवर्तना या प्रेरणा व्यक्त होती है जिससे कोई पुरुष किसी कार्य की ओर प्रवृत्त होता है, वही आर्थी भावना उस कार्य को सम्पन्न करने की प्रवृति है। दोनों भावनायें मानसव्यापार ही हैं, दोनों ही अभिप्राय विशेष हैं। जहाँ शाब्दी भावना दूसरे को किसी कर्म में प्रेरित करना है, वहीं आर्थी भावना है स्वयं ही किसी कर्म में प्रवृत्त होना। शाब्दी भावना कारण है और आर्थी भावना है उसका परिणाम या फल।[1]

इस पूरे निरूपण से स्पष्ट हो गया है 'भावना' का लक्षण सामान्य 'भवितुः भवनानुकूलो भावयितुः व्यापारविशेषः' शाब्दी तथा आर्थी दोनों भावनाओं में समानरूप से घटित हो जाता है। यहाँ भवितृ ( भवितुः ) का अर्थ है होने वाला, भवन का सम्पन्न होना, अनुकूल का सहायक या जनक तथा भावयितृ ( भावयितुः ) का प्रेरक, उत्पादयिता अथवा करने वाला है। भिन्न २ प्रत्ययों के योग से 'भू' धातु के ये रूप हैं।

## शाब्दीभावना

**( ६ ) तत्र पुरुषप्रवृत्त्यनुकूलो भावयितुर्व्यापारविशेषः शाब्दीभावना। सा च लिङंशेनोच्यते। लिङ्श्रवणेऽयं मां प्रवर्तयति मत्प्रवृत्त्यनुकूलव्यापारवानयमिति नियमेन प्रतीतेः। यद्यस्माच्छब्दान्नियमतः प्रतीयते तत्तस्य वाच्यम्। यथा गामानयेत्यस्मिन्वाक्ये गोशब्दस्य गोत्वम्।**

**स च व्यापारविशेषो लौकिकवाक्ये पुरुषनिष्ठोऽभिप्रायविशेषः। वैदिकवाक्ये तु पुरुषाभावाल्लिङादिशब्दनिष्ठ एव। अत एव शाब्दीभावनेति व्यवह्रियते।**

उनमें ( शाब्दी तथा आर्थी भावनाओं में ) व्यक्ति की प्रवृत्ति का जनक अथवा सहायक प्रयोजक का व्यापारविशेष शाब्दी भावना है। वह ( शाब्दीभावना प्रत्यय के ) लिङ् अंश से व्यक्त होती है, क्योंकि लिङ् का श्रवण होने पर निश्चित रूप से प्रतीत होता है कि यह मुझे प्रवृत्त कर रहा है अर्थात् यह मेरी प्रवृत्ति के अनुकूल व्यापार करने वाला है। जो ( अर्थ ) जिस शब्द से नियमित प्रतीत होता है, वह ( अर्थ ) उस शब्द का वाच्य हो जाता है। जैसे 'गाम् आनय', इस वाक्य में गोशब्द का गोत्व अर्थ होता है। और वह व्यापारविशेष लौकिक वाक्य में पुरुष में स्थित अभिप्राय विशेष है, किन्तु वैदिक वाक्य में पुरुष का अभाव होने से ( वह अभिप्रायविशेष ) लिङ् आदि शब्दों में ही स्थित रहता है। इसीलिये उसे ( शब्दनिष्ठ अभिप्रायविशेष को ) 'शाब्दी भावना' इस नाम से व्यवहृत करते हैं।

**तत्र शब्दभावनां लक्षयति—तत्रेति। तत्र तयोः शब्दभावनार्थभावनयोर्मध्य इत्यर्थः।**

१. Both शाब्दी भावना and आर्थी भावना are mental activities. Both of them can be looked upon as अभिप्रायविशेष—But hile शाब्दी भावना is the iutention to instigate another towards a certain tendency आर्थी भावना is the intention oneself to undertake a certain action. शाब्दी भावना is the cause, आर्थी भावना the effect arising therefrom'. The Arthasamgraha p. 85.

परिस्पन्दपरिणामविलक्षणः पुरुषप्रवृत्त्यात्मकार्थभावनोत्पत्त्यनुकूलो लिङादिशब्दस्य व्यापारविशेषः शब्दभावनेत्यर्थः। शब्दभावनैव लिङ्त्वादिना लिङाद्यर्थ इत्याह—सा चेति। तस्या लिङाद्यर्थत्वेऽनुभवं प्रमाणयति—लिङ्श्रवण इति। अनुभवमभिनयति—मदिति। यद्वा, ननु कथमननुभूयमानत्वाल्लिङादिवाच्यत्वं भावनाया लिङादेः प्रवर्तकत्वेऽपि तत्र भावनारूपव्यापारस्याननुभवादित्याशङ्क्य तं व्यापारं स्पष्टतयानुभावयति—मदित्यादिना। पुरुषप्रवृत्त्यनुकूलं व्यापारं लिङादिशब्दनिष्ठतयानुभावयित्वा तस्य लिङादिशब्दान्नियमेन प्रतीयमानत्वाल्लिङादिशब्दवाच्यत्वमित्यनुमानप्रदर्शनाय व्याप्तिं दर्शयति—यदित्यादिना। तत्रोदाहरणमाह—यथेत्यादि। सा च शब्दभावना लोके वेदे च प्रवर्तनात्वेनैव लिङादिशब्दवाच्या तत्त्वेनैव च पुरुषप्रवृत्तिहेतुरिति स्वीकर्तव्यम्। अन्यथा प्रैषादेरनेकस्य पुरुषाशयविशेषस्य विधिवाच्यत्वानुपपत्तिः स्यात्, आनन्त्यव्यभिचारदोषप्रसङ्गात्। प्रवर्तनात्वं च प्रवृत्त्यनुकूलव्यापारत्वम्। अनुकूलत्वं च जनकत्वम्।

तच्च लोके पुरुषाशयवृत्ति, वेदे तु पुरुषाभावात्पुरुषाशयभिन्नस्यैव कस्यचिल्लिङादिशब्दनिष्ठव्यापारविशेषस्य प्रवर्तनात्वमित्याशयेनाह—स चेत्यादिना। अत्रेदं बोध्यम्—तस्य व्यापारविशेषस्य प्रवृत्तिविषयस्येष्टसाधनत्वानुमानद्वारा प्रवृत्तिजनकत्वमङ्गीकरणीयम्। अन्यथा प्रवृत्तिविषयस्येष्टसाधनत्वानालेपे प्रवृत्त्यनुपपत्तिः स्यात्। तथा चानुमानम्—विमतमिदमिष्टसाधनमप्यत्र प्रवर्ततामित्याकारकाप्तेष्टव्यापारविशेषविषयत्वाद्यन्नैवं तन्नैवं यथा प्रतारकवाक्योपस्थितम्। अत्र सुखे सुखं मे जायतामित्युदासीनस्य कस्यचिदिच्छाविषयत्वेऽपीष्टसाधनत्वाभावात्तत्र व्यभिचारव्यावृत्तये हेतावाकारकान्तम्। प्रतारकस्य तादृशेच्छाविषये व्यभिचारवारणायाप्तेति। आप्तत्वं च लोकवेदसाधारणं प्रतारणाद्यजन्यहिताहितोपदेशकर्तृत्वे सति तद्भिन्नोपदेशाकर्तृत्वम्। प्रतारणया तु सर्वदा हिताहितोपदेशकर्तर्यनाप्तेऽतिप्रसङ्गवारणायाजन्यान्तम्। कदाचित्प्रतारणाद्यजन्यतत्कर्तरि तद्दोषवारणायोत्तरदलम्। हितस्योपदेशस्तत्संग्रहायाहितस्योपदेशश्च तत्परिहाराय बोध्यः। ततश्च तत्कर्तृत्वं लोके पुरुषविशेषे वेदे च 'यजेत स्वर्गकामः', 'न कलञ्जं भक्षये'दित्यादिवाक्ये भवति। तथा च लौकिकवैदिकव्यापारयोर्व्यापारविशेषत्वेन संग्रहाय हेतौ विशेषपदम्। वैदिकश्च स व्यापारविशेषः प्रवर्तनाप्रेषणाविध्यपरपर्याया भावनैव नञ्रहिते वाक्ये लिङाद्यर्थः। लौकिकस्तु प्रैषोऽतिसर्गः प्रेषणाज्ञाध्येषणानुज्ञानुमतिरित्यादिबहुविधो भवति। प्रमाणान्तरप्रमितेऽर्थे पुरुषनिष्ठा पुरुषप्रवर्तना प्रैषः। अतिसर्गः कामचारः। उत्कृष्टस्य निकृष्टं प्रति प्रवर्तना प्रेषणाऽऽज्ञा चोच्यते। निकृष्टस्योत्कृष्टं प्रति प्रवर्तना प्रार्थनाध्येषणा चोच्यते। समं प्रति समस्य प्रवर्तनोत्कर्षनिकर्षौदासीन्येन जातानुज्ञानुमतिश्चोच्यते। ते च प्रैषादयो ज्ञानविशेषा इच्छाविशेषा वा चेतनधर्माः। पुरुषस्याशयविशेषा एवेत्यभिप्रायेण ग्रन्थकारेणाप्युक्तम्—लौकिकवाक्ये पुरुषनिष्ठोऽभिप्रायविशेष इति। तथा च त एव लोके लिङाद्यर्थाः। तस्माल्लोके वेदे च व्यापार एव प्रवर्तनाख्यो लिङादिवाच्योऽर्थ इति फलितम्। ननु किमत्र वाच्यताख्यं शक्यतावच्छेकं शक्ततावच्छेदकं च? अन्यथातिप्रसङ्गापत्तेरिति चेत्। अत्रोच्यते—लौकिके हि प्रैषादौ वैदिके च भावनारूपे व्यापारे साधारणव्यापारत्वमेव पूर्वोक्तप्रवर्तनात्वरूपं शक्यतावच्छेदकमस्ति च लौकिके लिङादिपदोपस्थाप्येतत्प्रवृत्तिहेतुभूतेष्टसाधनताद्यनुमितिजनकं पुरुषाशयविशेषे प्रवृत्तिप्रयोजकव्यापारत्वं वेदेऽपि

लिङादिशब्दश्रवणादुत्तरकाले यागादिप्रवृत्तिदर्शनेनेयं देवदत्तस्य यागादिप्रवृत्तिः व्यापाराख्य-प्रवर्तनाज्ञानपूर्विका अन्यप्रेरितप्रवृत्तित्वाच्चैत्राशयज्ञानजन्यमैत्रगवानयनप्रवृत्तिवदित्यलौकिक-मेव व्यापारमपौरुषेये वेदे इच्छादेर्बाधादनुमाय तत्प्रतीतेर्लिङादिज्ञानान्वयव्यतिरेकानु-विधायित्वेन तत्र लिङादिवाच्यत्वं च परिकल्प्य तस्य पूर्वोक्तविधिना प्रवृत्तिहेतुभूतेष्ट-साधनताद्यनुमापकतया बालस्तत्रापि प्रवृत्तिप्रयोजकव्यापारत्वं प्रतिपद्यते। कथं तर्हि लोकेऽपि व्यापारप्रतिपत्तिरिति चेदित्थम्—उत्तमवृद्धस्य सविधिकवाक्यश्रवणोत्तरकाल-भाविनीं मध्यमवृद्धस्य गवानयनप्रवृत्तिमुपलभ्य बालो लोकेऽपि तत्प्रयोजकव्यापारमनु-मिमीते। यथा हि गवानयनानुकूलोत्तमवृद्धवाक्यश्रवणोत्तरभाविनी मध्यमवृद्धप्रवृत्तिः प्रवर्तनाज्ञानपूर्विका अन्यप्रेरितप्रवृत्तित्वान्मद्वोदनपूर्वकमदीयभोजनादौ मदभिप्रायजन्य-मन्मातृप्रवृत्तिवत्। अत्र स्वतःसिद्धप्रवृत्ताविष्टसाधनताज्ञानजन्यस्वप्रवृत्तौ च व्यभिचार-वारणायान्यप्रेरितेति विशेषणम्। किंच प्रवर्तनाज्ञानमुत्तमवृद्धवाक्यजन्यं तदन्वयव्यतिरेकानु-विधायित्वाद्दण्डान्वयव्यतिरेकानुविधायिघटवत्। किंच यस्माच्छब्दाद्यत्प्रतीयते तत्तद्वाच्यं घटपदवाच्यघटत्ववदित्युत्तमवृद्धवाक्यस्य मुग्धाकारां शक्तिं व्यापाराख्यप्रवर्तनायामवधार्य तत्र चावापोद्वापाभ्यां विधिशक्तिं तस्यामवधारयति, एवं सर्वत्रोह्यम्। तस्माल्लोकवेद-साधारण्येन व्यापारत्वमेव शक्यतावच्छेदकमिति सिद्धम्। शक्ततावच्छेदकं तु लिङ्त्वलेट्-त्वलोट्त्वादिकं बोध्यम्। किंच यद्यपि निरुक्तविधया व्यापारत्वेनैव सामान्यरूपेण व्यापारज्ञानं तच्च विशेषज्ञानसापेक्षमतिप्रसङ्गवारणाय तथापि प्रमाणान्तरेण विशेषबोधः सुलभः। यथा घटवद्भूतलमित्यादौ घटपदाद् घटत्वावच्छिन्नघटमात्रप्रतीतावपि तस्य योग्य-संसर्गेण भूतलादावन्वये बुद्धे तत्संसर्गस्य तत्त्वेन जिज्ञासायां प्रत्यक्षादिप्रमाणान्तरेणैव संयो-गत्वादिना संयोगादिरूपसंसर्गप्रतीतिर्भूतलवृत्तिघटविशेषप्रतीतिश्च भवति, तथा लिङादि-पदाद्व्यापारत्वावच्छिन्नव्यापारमात्रस्योपस्थितावपि तस्याख्यातोपात्तार्थभावनाया योग्यसंसर्गे-णान्वये बुद्धे पश्चात्तत्संसर्गस्य तत्त्वेन जिज्ञासायां प्रवृत्तिप्रयोजकत्वानुपपत्त्यादिना प्रमाणेनैव विशेषरूपेण संसर्गविशेषप्रतीतिर्यागादिप्रवृत्तिसंबन्धिव्यापारविशेषप्रतीतिश्च भवति, संसर्ग-विशेषस्तु तत्तत्प्रवृत्तिप्रागभावकाले यल्लिङादिपदज्ञानं तेनोत्पादितं यत्प्रेरणाज्ञानं तज्जन्येष्ट-साधनताद्यनुमितिप्रयोज्यत्वम्। तेन च व्यापारवती यागादिप्रवृत्तिरिति भवति विशेषनिर्णयः। एवं च लोके वेदे च लिङादिश्रवणे प्रैषादिरूपस्य वक्त्रभिप्रायस्य भावनारूपस्य च व्यापार विशेषस्यव्यापारत्वेनैव रूपेण प्रतीतिर्न विशेषरूपेण, तथैव शक्तिग्रहात् विशेषरूपेण प्रतीतिस्तु लोकेऽजहल्लक्षणयैव। वेदे तु विशेषरूपाकाङ्क्षायां प्रैषादिरूपस्य वक्त्राशयविशेषस्यापौरुषेये वेदेऽसंभवेन लिङादिशब्दनिष्ठ एव प्रेरणापरपर्यायः कश्चिद्व्यापारो विशेषरूप इत्युक्तमेव, तस्मान्निरुक्तव्यापार एव लिङाद्यर्थो नेष्टसाधनत्वादिरिति सिद्धम्। नन्विष्टसाधनत्वमेव प्रवर्तनात्वेन रूपेण वेदे लिङाद्यर्थ इति मण्डनमिश्रा वदन्ति। अर्थभावनाभिधानानुकूलाया लिङादिनिष्ठशक्तेरेवाभिधाख्यायाः प्रवर्तनात्वेन रूपेण लिङादिवाच्यत्वं परिकल्प्य तज्ज्ञान-स्य प्रवृत्तिं प्रति कारणत्वमात्रं वेदे कल्प्यत इति तु पार्थसारथिर्वदति। लिङादिश्रवणा-नन्तरं प्रवृत्तिदर्शनात्प्रवृत्तिसामग्रीजननद्वारा लिङादिज्ञानस्य प्रवृत्त्याद्युपयोग इति तावद-विवादम्। तत्सामग्री च कृतिसाध्यत्वप्रकारकेच्छारूपा चिकीर्षा, तस्याश्च स्वरूपसत्याः

कारणत्वात्तत्र लिङादिज्ञानस्यानुपयोगेऽपि चिकीर्षाकारणीभूतज्ञाने तदुपयोगः कल्प्यते। तच्च बलवदनिष्टाननुबन्धित्वज्ञानं कृतिसाध्यत्वज्ञानमिष्टसाधनत्वज्ञानं च अन्यतमाभावे इतरद्वय सत्वेऽपि मधुविषान्नभोजने चन्द्रस्पर्शे मण्डलीकरणादौ वा प्रवृत्त्यनुत्पत्तेः। तस्माल्लिङादिज्ञानेन त्रितयज्ञानजननाल्लिङादेर्बलवदनिष्टाननुबन्धित्वे कृतिसाध्यत्वे इष्टसाधनत्वे च शक्तिरिति तार्किकाः, तस्मात्कथं व्यापारस्य लोकवेदसाधारणस्य लिङाद्यर्थत्वमिति चेद्, अत्रोच्यते—न तावदिष्टसाधनत्वं लिङाद्यर्थः, इष्टसाधनत्वज्ञानादेव प्रवृत्त्युपपत्तौ, गुरुप्रेरितोऽहं जलमानयामीत्यादौ गुर्वादेः प्रवर्तकत्वव्यवहारानुपपत्तेः। न च प्रवृत्तिजनकेष्टसाधनताबोधकलिङुच्चारयितृत्वात्तस्य प्रवर्तकत्वव्यवहार इति वाच्यम्। राजप्रेरितपदातेस्तादृशलिङुच्चारयितृत्वेन प्रवर्तकत्वापत्तौ पदातिप्रेरितोऽहं न गामानयामि किंतु राजप्रेरित इति पदातौ प्रवर्तकत्वाभावव्यवहारानुपपत्तेः। न चान्याप्रेरितत्वे सति तादृशलिङुच्चारयितृत्वं प्रवर्तकत्वमिति वाच्यम्। पिशुनप्रेरिते राज्ञि प्रवर्तकत्वानुपपत्तेः। ततश्च तादृशव्यवहारबलात्प्रवृत्तिकारणीभूतज्ञानविषयाशयविशेषाश्रयत्वेनैव राजादेः प्रवर्तकत्वं वाच्यं न चाशयविशेषस्य लिङादिवाच्यत्वाभावे ततस्तज्ज्ञानं संभवति तस्माल्लिङादिवाच्यत्वं तस्येति। नाप्यर्थभावनाभिधानानुकूलायाः शक्तेर्लिङाद्यर्थत्वं संख्याभिधानानुकूलशक्त्या लिङ्त्वादिनैव वा विनिगमनाविरहात्। नापि बलवदनिष्टाननुबन्धित्वादेर्लिङाद्यर्थत्वं, शक्तित्रयकल्पनायां गौरवप्रसङ्गात् बलवदनिष्टाननुबन्धित्वज्ञानाभावेऽपि बलवदनिष्टानुबन्धित्वज्ञानाभावमात्रेणेष्टसाधनत्वज्ञानादिनैव प्रवृत्तेरनुभवसिद्धत्वाच्च। तस्माद्बलवदनिष्टानुबन्धित्वज्ञानं प्रवृत्तिप्रतिबन्धकं तदभावश्च स्वरूपसन्नेव तत्कारणमिति स्वीकर्तव्यम्। तस्मान्निरुक्तस्य व्यापारस्यैव लिङाद्यर्थत्वं सर्वत्र नेष्टसाधनत्वादेरिति सिद्धम्। 'अभिधाभावनामाहुरन्यामेव लिङादय' इति वार्तिकानुरोधेनाह—अत एवेति। शब्दनिष्ठत्वादेवेत्यर्थः। अभिधाशब्देनाभिधीयतेऽनेनेति व्युत्पत्त्या शब्द उच्यते, तस्य व्यापारविशेषो भावना, तां स्वनिष्ठामन्यामर्थभावनाभिन्नां लिङादय आहुरिति वार्तिकवचनार्थः।

यहाँ शाब्दी भावना का स्वरूप, प्रवर्तन की प्रक्रिया आदि को स्पष्ट किया गया है। पूर्ववर्ती अंशों से स्पष्ट है कि किसी भी क्रिया में मुख्यतः दो तत्त्व होते हैं, एक वह सूत्र जो क्रिया के लिये प्रेरित करता है और दूसरा वह जो क्रिया में प्रवृत्त होता है। प्रेरित करने वाले का सम्बन्ध शाब्दी भावना से है और प्रवृत्त होने वाले का आर्थी भावना से। प्रेरक का मानसव्यापार—प्रवृत्ति अथवा व्यापारविशेष—प्रेरित व्यक्ति के मानस व्यापार का जनक होता है। प्रेरक का ही व्यापारविशेष शाब्दी भावना है। इसको ही 'पुरुषप्रवृत्त्यनुकूलो०' आदि शब्दों से स्पष्ट किया गया है।

शाब्दीभावना के लक्षण में प्रयुक्त 'पुरुष' तथा 'भावयितुः' पद विशेष महत्त्व के हैं। लोकव्यवहार में कोई पुरुष ही प्रेरक होता है और कोई पुरुष ही प्रेरित भी होता है, किन्तु वैदिक व्यवहार में यह अनिवार्य नहीं। वहाँ प्रेरित होने वाला तो पुरुष होता है किन्तु प्रेरक पुरुष ही हो यह आवश्यक नहीं। इसी भाव को स्पष्ट करने के लिये प्रेरित के स्थान पर ग्रन्थकार ने 'पुरुष' शब्द का प्रयोग किया है किन्तु 'प्रेरक' के स्थान पर 'भावयिता' का। 'भावयिता' पुरुष भी हो सकता है और लिङ् आदि भी। लौकिक वाक्यों के जनक प्रेरकपुरुष का प्रत्यक्षतः ग्रहण हो जाता है। वैदिक वाक्यों का रचयिता मीमांसा के अनुसार कोई नहीं है, अतः लौकिकव्यवहार में व्यापारविशेष वक्ता पुरुष में स्थित माना जाता है और वैदिकव्यवहार में लिङ् में, जो वस्तुतः

धातु में लगने वाले प्रत्यय का एक अंश है। इस प्रकार शाब्दीभावना सामान्यतः दो प्रकार की हो जाती है—१–वैदिकी २–लौकिकी।

**लिङंशेनोच्यते**—शाब्दीभावना का ज्ञान वाक्य में प्रयुक्त धातु में लगी 'त' प्रत्यय के लिङ् अंश को सुनने पर होता है। जैसे ही उपासीत, यजेत आदि लिङ् लकारान्त धातुयें सुनने को मिलती हैं, वैसे ही सुनने वाला समझने लगता है कि इन शब्दों का प्रयोक्ता उपासना आदि कार्यों में प्रवृत्त करना चाहता है, अर्थात् इसका मानसिकव्यापार—उसकी इच्छा—मुझमें किसी व्यापार को उत्पन्न करना चाहता है, वह चाहता है कि मैं कोई व्यापार करूँ, उसकी इच्छा मेरी इच्छाओं का जनक है। प्रेरक प्रयुक्त लिङ् को सुनते ही सहज रूप से अपनी प्रवृत्ति के अनुकूल उसके व्यापार का ज्ञान हो जाता है, अर्थात् प्रेरित का व्यापारविशेष लिङ् का वाच्य होता है, क्योंकि जिस शब्द को सुनने से जिस अर्थ की स्वतः प्रतीति होने लगती है, वह अर्थ उस शब्दविशेष का वाच्य कहा जाता है। मूल में प्रयुक्त 'नियमेन' विशेष महत्त्व का है। 'नियमेन' का सामान्य अर्थ 'नियमानुसार' अथवा 'एक निश्चित विधि के अनुसार है', किन्तु यहाँ इसका अर्थ 'साक्षात् रूप से' लेना चाहिये। किसी भी शब्द का वाच्य अर्थ वही होता है जो उस शब्द से बिना किसी बाध या व्यवधान के प्रकट होता है। जहाँ बाध आदि का प्रसंग होता है वहाँ लक्ष्य या व्यङ्ग्य अर्थ प्रतीत होता है, वाच्य नहीं। अतः वाच्य अर्थ की नियमतः प्रतीति का अर्थ साक्षात् प्रतीति मानना चाहिये। वाच्य अर्थ को ही अभिधेय, मुख्य, साक्षात्–संकेतित आदि भी कहा जाता है।[1] चूँकि लिङ् का श्रवण होने के बाद ही प्रेरित पुरुष की प्रवृत्ति में अनुकूलता आती है, अतः यह प्रेरित की प्रवृत्ति-व्यापार-लिङ् का अर्थ हुआ, जैसे गोशब्द को सुनने पर उससे 'गोत्व' अर्थ की साक्षात् प्रतीति होती है, अतः 'गोत्व' को 'गो' का वाच्य अर्थ समझा जाता है। कुमारिल भट्ट ने भी अभिधा को ही वाच्य का हेतु माना है।[2]

**गोशब्दस्य गोत्वम्**—सामान्यतः शब्द चार प्रकार के माने जाते हैं–(१) जातिशब्द जो जाति या सामान्य का ज्ञान कराते हैं, जैसे गोशब्द गोत्व का। (२) गुणशब्द—जो गुणों के वाचक हैं जैसे 'शुक्ल' आदि। (३) क्रियाशब्द—जो क्रिया का बोध कराते हैं जैसे, पाकः, पचति आदि (४) द्रव्य, संज्ञा, यदृच्छाशब्द—जो किसी पिण्ड के स्वेच्छा कल्पित नाम होते हैं जैसे बैल के लिये 'डित्थ' आदि का प्रयोग। व्यावहारिक प्रक्रिया यह है कि किसी भी पदार्थ की आवश्यकता होने पर उसके वाचक पद का उच्चारण किया जाता है, उस पद से उसके वाच्य अर्थ के रूप में वह वस्तु ही उपस्थित होती है जिससे आवश्यकता की पूर्ति होती है। जैसे 'गामानय' 'गाय को लाओ' कहने पर एक चतुष्पाद प्राणी लाया जाता है। यह शरीरवान् प्राणी ही गोपद का वाच्य अर्थ द्रव्य, पिण्ड या व्यक्ति है। यह पिण्ड ही लाया तथा ले जाया जा सकता है। वास्तविकता यही है, किन्तु मीमांसकों का मत है कि 'गोपद' का उच्चारण करने पर गोपिण्ड, व्यक्ति या द्रव्य नहीं प्राप्त होगा, अपितु उसके स्थान पर 'गोत्व' जाति ही साक्षात् अर्थ के रूप में उपस्थित होगी, गोत्वजाति स्वयं अर्थक्रियाकारित्व में—इच्छापूर्ति में—सहायक नहीं हो सकती, अतः लक्षणा से उसका अर्थ 'गो-व्यक्ति' लिया जायेगा। इसी अभिप्राय को व्यक्त करने के लिये ग्रन्थ के मूल अंश में 'गोशब्दस्य गोत्वम्' कहा गया है।

वस्तुतः भारतीय परम्परा के विभिन्न सम्प्रदाय के आचार्यों ने मुख्यार्थ के विषय में भिन्न-भिन्न मत प्रकट किया है। जहाँ नव्यनैयायिक केवलव्यक्ति को ही मुख्यार्थ मानते हैं, वहीं प्राचीन-नैयायिक जातिविशिष्ट व्यक्ति को, बौद्ध लोग अपोह को, मीमांसक जाति को तथा वैयाकरण और अलङ्कारशास्त्री जात्यादि को।[3]

---

१. स मुख्योऽर्थस्तत्र मुख्यो व्यापारोऽस्याभिधोच्यते ॥ काव्यप्रकाश २।८ ॥

२. अभिधाभावनामाहुरन्यामेव लिङादयः। अर्थात्मभावना त्वन्या सर्वाख्यातेषु गम्यते ॥

३. द्रष्टव्य मम्मटकृत काव्यप्रकाशः २।८ ॥ तथा उस पर वृत्ति एवं The Arthasamgraha p. 86.

**वैदिकवाक्ये तु पुरुषाभावात्**—इन शब्दों में यह व्यक्त किया गया है कि लौकिक वाक्यों के कहने वाले अथवा उत्पादक का प्रत्यक्ष होता है। लौकिक वाक्य पुरुषकृत होते हैं, उनका वक्ता या रचयिता कोई पुरुष होता है, अतः वे पौरुषेय हैं। पौरुषेय वाक्यों में विहित अभिप्राय का आधार उनका कहने वाला पुरुष होता है, इसलिये इनका व्यापारविशेष पुरुषगत होता है। वैदिक वाक्यों में यह बात नहीं।

मीमांसकों के अनुसार वेद शाश्वत, अनादि एवं नित्य हैं। ये किसी भी लौकिक पुरुष-मनुष्य आदि अथवा अलौकिक पुरुष-ईश्वर आदि द्वारा रचे नहीं गये, न उनकी वाणी हैं। पुरुषों में दोष सम्भव हैं, अतः उनकी कृतियाँ भी दोषपूर्ण हो सकती हैं। वेद किसी पुरुष की कृति नहीं हैं अतः वे समस्त दोषों से रहित एवं शुद्ध प्रामाणिक है। नित्यरूप से विद्यमान वेद प्रलयों के बाद भी विद्यमान रहते हैं और प्रतिकल्प के प्रारम्भ में ब्रह्मा उनका स्मरण किया करते हैं, न कि रचते हैं। उनके अनुसार ही मनुष्यगण शास्त्र की रचना करते रहते हैं।[1] नैयायिक वेदों को ईश्वरकृत मानते हैं। ईश्वर को सर्वज्ञ, सर्वशक्तिमान् आदि मानकर वे वेदों को आप्त स्वीकार करते हैं। वेदान्ती भी 'व्यवहारे यथा भाट्टनयः' के अनुसार वेदों को अपौरुषेय मानते हैं तथापि भगवत्पाद आद्यश्रीशङ्कराचार्य ने अपने ब्रह्मसूत्र के 'शास्त्रयोनित्वात्' ( ब्र० सू० १।१।३ ) के भाष्य के एक वर्णक में वेदों को ईश्वरकृत स्वीकार करने में आपत्ति नहीं की है। मीमांसकों के पक्ष को 'मीमांसा-न्यायप्रकाश' में सरल शब्दों में खूब स्पष्ट किया गया है—

"न हि वेदः पुरुषनिर्मितः।
वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम्।
वेदाध्ययनसामान्यादधुनाध्ययनं यथा॥ ( श्लोकवा० वाक्या० ३६६ )

इत्यादिना वेदापौरुषेयत्वस्य साधितत्वात्। 'यः कल्पः स कल्पपूर्वः' इति न्यायेन संसारस्यानादित्वादीश्वरस्य च सर्वज्ञत्वादीश्वरो गतकल्पीयं वेदमस्मिन् कल्पे स्मृत्वा उपदिशतीत्येतावता एव उपपत्तौ प्रमाणान्तरेणार्थमुपलभ्य रचितत्वकल्पनानुपपत्तेश्च। ततश्च पुरुषाभावाच्छब्दनिष्ठैव सा।" ( पृ० ३२–४१ ) वेद के अपौरुषेयत्व पर जैमिनि के मीमांसा सूत्र ( १।१।२७–३२ ), उन पर शावर-भाष्य, सर्वदर्शनसंग्रह में सम्बद्ध अंश, सायण की ऋग्वेदभाष्योपक्रमणिका, आदि ग्रन्थों को देखना चाहिये। जैमिनिन्यायमालाविस्तर में कहा गया है कि संहिताओं का काठक, कौथुम, तैत्तिरीयक आदि नाम इन ग्रन्थों के अध्ययन के सम्प्रदाय के प्रवर्तकों के नाम पर हैं न कि रचयिताओं के 'अध्ययनसंप्रदायप्रवर्तकत्वेन समाख्योपपद्यते' आदि ( पृ० २१ )।

**भावना की लिङ्निष्ठता**—लौकिक वाक्यों में शाब्दी भावना को पुरुषनिष्ठ एवं वैदिक वाक्यों में लिङ्निष्ठ कहा गया है। वास्तविकता यह है कि दोनों प्रकार के वाक्यों में भावना को लिङ् में ही स्थित मानना चाहिये, क्योंकि प्रयोजक पुरुष वर्तमान भले ही हो, जबतक वह लिङ् का उच्चारण नहीं करता उसका अभिप्राय व्यक्त नहीं होता। यह कोई तर्क नहीं है कि वैदिक वाक्य का कोई कर्त्ता नहीं है, अतः उसमें भावना को लिङ्निष्ठ माना जाये और लौकिक वाक्य का है, अतः उसमें उसे पुरुषनिष्ठ स्वीकार किया जाये। इस ओर 'मीमांसान्यायप्रकाश'कार का ध्यान नहीं गया और उनके अनुगामी अर्थसंग्रहकार का भी। लगता है यह भूल बहुत पहले से शुरू हुई और उसको आप्त मानकर स्वीकारने की परम्परा चल पड़ी।

इस प्रसङ्ग में कृष्णनाथ भट्टाचार्य का तर्क अधिक संगत है जहाँ उन्होंने कहा है—'वस्तुतः लोके वेदे च लिङादिशब्दनिष्ठ एवं भावनाख्यव्यापारो, लाघवात्। लिङादिशब्दमन्तरेण पुरुषाभिप्रायस्यानिश्चेयतया लोकेऽपि लिङादेरेव अन्वयव्यतिरेकावश्यम्भावाच्च। अन्यथा लौकिकलिङः

---

१. न कश्चित् वेदकर्त्ता च वेदस्मर्त्ता पितामहः।
तथैव धर्मं स्मरति मनुः कल्पान्तरान्तरे॥

प्रवर्तकत्वं व्याहन्येत । भावनायाः पुरुषनिष्ठत्वे शब्दनिष्ठत्वेन शाब्दभावनात्वव्यपदेशानुपपत्तेश्च इति द्रष्टव्यम् ।'[1] अर्थात् वस्तुतः लौकिक एवं वैदिक दोनों वाक्यों में भावना नाम का व्यापार लिङादि शब्दों में स्थित है, ऐसा ही मानने पर प्रयत्नलाघव होगा, समझने में आसानी होगी । लिङ् आदि शब्द के बिना पुरुष का अभिप्राय निश्चित रूप से ज्ञात न हो सकेगा, अतः लौकिकवाक्य में भी अन्वय एवं व्यतिरेक दोनों हेतुओं से लिङ् आदि की आवश्यकता पड़ेगी ही । यदि लिङ की आवश्यता नहीं स्वीकार की जाती है तो लौकिकवाक्यों में लिङ् का प्रयोग अनावश्यक होगा और उससे प्रवर्त्तन नहीं हो सकेगा । इसके अतिरिक्त यदि भावना को पुरुषनिष्ठ भी मान लिया गया तो शब्दनिष्ठता के कारण ही 'शाब्दी' कही जाने वाली भावना का 'शाब्दीभावना' यह नाम अनुपपन्न हो जायेगा ।'

अर्थसंगति के लिये 'पुरुषनिष्ठोऽभिप्रायविशेषः' का अर्थ यह लेना चाहिये कि लौकिकवाक्य में तो लिङ् आदि से व्यक्त होने वाला व्यापारविशेष उसका उच्चारण करने वाले पुरुष का ही अभिप्राय विशेष होता है, लौकिकवाक्य का लिङ् किसी स्वतन्त्र, निर्दुष्ट अथवा शुद्ध प्रामाणिक व्यापार का ही बोध नहीं कराता, उसमें निहित भावना पुरुष के भीतर विहित व्यक्तित्व से प्रभावित होती है, जब कि वैदिकवाक्यों में इन सबका अभाव होने से स्वतःप्रामाण्य है । यह अर्थ लेने पर विरोध परिहार तथा इष्टपूर्ति दोनों हो जाते हैं । 'वैदिकवाक्ये तु पुरुषाभावाल्लिङ्गादिशब्दनिष्ठ एव' में 'एव' पद महत्त्वपूर्ण है, जिसका यह भी अर्थ निकलता है कि वैदिक वाक्य में पुरुष का अभाव होने से व्यापार विशेष केवल लिङ् आदि शब्दों में ही रहता है, न कि पुरुष में भी जैसा कि लौकिकवाक्यों में होता है ।

**( ७ ) सा च भवना अंशत्रयमपेक्षते—साध्यं साधनमितिकर्तव्यतां च, किं भावयेत्, केन भावयेत्, कथं भावयेदिति ।**

**तत्र साध्याकाङ्क्षायां वक्ष्यमाणांशत्रयोपेता आर्थीभावना साध्यत्वेनान्वेति एकप्रत्ययगम्यत्वेन समानाभिधानश्रुतेः । संख्यादीनामेकप्रत्ययगम्यत्वेऽप्ययोग्यत्वान्न साध्यत्वेनान्वयः ।**

**साधनाकाङ्क्षायां लिङादिज्ञानं करणत्वेनान्वेति । तस्य च करणत्वं न भावनोत्पादकत्वेन, तत्पूर्वमपि तस्याः शब्दे सत्त्वात् । किन्तु भावनाज्ञापकत्वेन शब्दभावनाभाव्यनिर्वर्तकत्वेन वा ।**

**इतिकर्तव्यताकाङ्क्षायामर्थवादज्ञाप्यप्राशस्त्यमितिकर्तव्यतात्वेनान्वेति ।**

और वह ( शाब्दी ) भावना तीन अंशों साध्य, साधन तथा इतिकर्त्तव्यता की अपेक्षा करती है । ( इन तीनों अंशों का क्रमशः अभिप्राय यह है कि इस शाब्दी भावना से ) किस ( फल ) को सिद्ध किया जाये, किस ( साधन ) से निष्पन्न किया जाये, तथा किस प्रकार से सिद्ध किया जाये । इन ( तीनों ) में से साध्य के विषय में आकांक्षा होने पर आगे कही जाने वाली तीनों अंशों से युक्त आर्थी भावना साध्य के रूप में अन्वित होती है, क्योंकि एक ही ( त ) प्रत्यय से ज्ञात होने के कारण एक ही अभिधान से ( शाब्दी भावना के साथ ही आर्थी भावना का भी ) ग्रहण हो जाता है । संख्या आदि का भी एक ( त ) प्रत्यय से ही ज्ञान होने पर भी अयोग्य होने से—( साध्य के रूप में आकांक्षा की पूर्ति में अक्षम अथवा अविवक्षित होने से ) उनकी साध्य के रूप में संगति नहीं बैठती । साधन की आकांक्षा होने पर लिङ् आदि का ज्ञान साधकतम साधन के रूप में अन्वित होता है । उस ( लिङ् आदि के

१. प्रतिपादिका टीका पृ० १९.

ज्ञान की ) करणता इसलिये नहीं है कि उससे भावना की उत्पत्ति होती है क्योंकि उस ( लिङ् आदि का ज्ञान होने से ) पहले भी भावना शब्द में रहती ही है। अपितु ( लिङ् आदि का ज्ञान ) भावना के ज्ञापक के रूप में अथवा शाब्दी भावना के साध्य के साधक के रूप में ( करण होता है। ) इति कर्त्तव्यता ( अर्थात् व्यापार को कैसे किया जाये ) को जानने की इच्छा होने पर अर्थवाद से ज्ञाप्य प्रशस्तता ( अथवा निन्दितता ) इतिकर्त्तव्यता के रूप में अन्वित होती है।

सा च निरुक्ता शब्दभावना साध्याद्यंशत्रयापेक्षा तादृशांशत्रयवती भवतीत्याह—सा चेत्यादिना। साध्याकाङ्क्षामभिनयति—किमित्यादिना।

तत्रेति। साध्यादिभावनांशेऽपीत्यर्थः। वक्ष्यमाणेति। वक्ष्यमाणा या स्वर्गादिरूपसाध्याद्यंशत्रयोपेतेत्यर्थः। एकप्रत्ययगम्यत्वेन समानाभिधानश्रुतेरिति। अर्थभावनाया एव शब्दभावनासाध्यत्वमनयोरेकलिङादिप्रत्ययगम्यत्वेनैकलिङादिप्रत्ययशब्दात्मिकायाः समानाभिधानश्रुतेः सत्वादित्यर्थः। एतेन यागादेः साध्यत्वाशङ्का निरस्ता, तस्यैकपदादिश्रुतिगम्यत्वेनैकप्रत्ययरूपसमानाभिधानश्रुत्यगम्यत्वात्। शब्दार्थभावनयोस्त्वेकाभिधानश्रुतिगम्यत्वेन संनिकृष्टयोर्भवति विवक्षितः संबन्ध इति द्रष्टव्यम्। ननु संख्यादीनामपि शब्दभावनाभाव्यत्वं स्यात्तेषामप्येकप्रत्ययगम्यत्वेन समानाभिधानश्रुतेरविशेषादितिचोद्यमुद्भाव्य परिहरति—संख्यादीनामित्यादिना। आदिना कालादिपरिग्रहः। संख्यादीनां साध्यत्वेनान्वयाभावे हेतुमाह—अयोग्यत्वादिति। अपुरुषार्थत्वेन च तत्साधनशून्यत्वेन संख्यादीनां साध्यत्वयोग्यतानाश्रयत्वादित्यर्थः। शब्दभावनाया भाव्यसाकाङ्क्षत्वाद्भाव्यान्तरस्य चादर्शनादर्थभावनायाश्च विधिप्रयोज्यत्वात्पुरुषार्थानुबन्धित्वाच्च तस्या एव समानाभिधानश्रुतेः शब्दभावनाभाव्यत्वमिति समुदायतात्पर्यम्। तदेवमर्थभावनायाः पुरुषार्थहेतुतया शब्दभावनाभाव्यत्वमुक्तम्।

तत्र च करणाकाङ्क्षायां करणान्तरस्यादर्शनात्करणांशं लिङादिविधिशब्दज्ञानमेवाह—साधनेत्यादिना। यद्वा, लिङादिशब्दव्यापारस्य सर्वदा पुरुषप्रवृत्तिजनकत्वं किं न स्यादित्याशङ्क्य करणरूपसहकार्यभावान्नैवमित्याशयेनाह—साधनेत्यादिना। अत एव ग्रन्थकारेणाप्युक्तं भावना ज्ञापकत्वेनेति। स्वज्ञानस्यैव स्वज्ञापकत्वम्। लिङादीत्यादिना लेट्लोटादिपरिग्रहः। तथा च लिङादिज्ञानं शब्दभावनायां करणत्वेनैवान्वयं लभते, न तु शब्दभावनाकरणत्वेनापि कल्पनायां गौरवप्रसङ्गात्। ज्ञानस्य पुरुषनिष्ठत्वेन शब्दनिष्ठत्वाभावाच्छब्दभावनात्वासंभवप्रसङ्गाज्ज्ञानस्य तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वेन शब्दभावनाया नित्यत्वव्याघातप्रसङ्गाच्च। शब्दभावना तु निरुक्त एव व्यापारविशेष इति भावः। लिङादिज्ञानमित्यत्र लिङादिधर्मस्य भावनारूपस्य वा ज्ञानं विवक्षितम्। तदेव च शब्दभावनायाः करणांशम्। तथा चोक्तम्–लिङादिशब्दव्यापारः पुरुषप्रवृत्तिलक्षणार्थभावनालक्षणभाव्यनिष्ठः स्वज्ञानकरणक इति द्रष्टव्यम्। ज्ञापकत्वमत्र प्रकाशकत्वमेव, तथा च तादृशधर्मज्ञाने सत्येव पुरुषप्रवृत्तिदर्शनेन तस्य वक्ष्यमाणपुरुषप्रवृत्तिनिर्वर्तकत्वेन शब्दभावनाकरणत्वं नानुपपन्नमिति भावः। अन्ये त्वाहुः–विधिशब्दस्य पुरुषप्रवृत्तिरूपार्थभावनाज्ञानहेतुर्व्यापारस्तद्वाचकशक्तिमत्तया विधिशब्दज्ञानं स एव च तस्य प्रवृत्तिहेतुर्व्यापार इति प्रवर्तनाभिधानीयकं लभते, ज्ञानद्वारेणैव शब्दस्य प्रवृत्तिजनकत्वात्

ज्ञानजनकव्यापारातिरिक्तव्यापारकल्पने मानाभावात् । ज्ञानकरणकश्च व्यापारस्तस्य स्वज्ञानं शक्तिज्ञानं शक्तिविशिष्टस्वज्ञानं च । तत्राद्ययोरन्यतरस्य शब्दभावनात्वं तृतीयस्य तु तत्र करणत्वमिति विवेक इति । तस्य च लिङादिज्ञानस्य न शब्दभावनोत्पादकत्वेन तत्करणत्वं संभवति । तस्माल्लिङादिज्ञानात्पूर्वमपि तस्याः शब्दभावनायाः शब्दे विद्यमानत्वेन तदुत्पादकत्वासंभवादित्याह—तस्य चेत्यादिना । ननु कथं लिङादिज्ञानस्य भावनासाधकत्वेन तत्करणत्वं न स्वीक्रियते, चक्षुरादेस्तत्सं निकर्षस्य वा रूपादिज्ञानसाधकत्वेनैव तत्करणत्वदर्शनादिति चोदयति—किंत्विति । समाधत्ते—भावनेत्यादिना । यथा कुठारस्य छिदिक्रियाभाव्यद्वैधीभावनिर्वर्तकत्वेन छिदिभावनाकरणत्वं तथा लिङादिज्ञानस्य शब्दभावनाभाव्यार्थभावनानिर्वर्तकत्वेन शब्दभावनाकरणत्वमिति भावः । तथा चोक्तं कुठारादीनामपि छिदिक्रियाभाव्यद्वैधीभावनिर्वर्तनद्वारेण छिदिभावनाकरणत्वदर्शनादिति । किंच रूपादिज्ञानस्य चक्षुःसंनिकर्षादेः प्रागसत्त्वेन तस्य तत्साधकत्वेन तत्करणत्वं, शब्दभावनायास्तु प्रागपि सत्त्वेन लिङ्गादिज्ञानस्य तत्साधकत्वेन तत्करणत्वासंभवेऽपि तद्भाव्यार्थभावनानिर्वर्तकत्वेन तस्य शब्दभावनाकरणत्वं कुठारवदुपपद्यते । ननु कुठारस्य तु छिदिक्रियानिर्वर्तकत्वमपि भवतीति चेत्सत्यम् । दृष्टान्तस्तु यथा कुठारस्य छेदननिर्वर्तकत्वेऽपि तस्याफलत्वेन छिदिक्रियाभाव्यद्वैधीभावफलनिर्वर्तकत्वेनैव तत्करणत्वमिति द्रष्टव्यम् ।

ननु पुरुषो लिङादिज्ञानेन स्वप्रवृत्तिं भावयेदित्युक्ते सर्वेषामेव यागादौ प्रवृत्तिः किं न स्यादित्याशङ्क्य सर्वेषां प्राशस्त्यज्ञानाभावेन न सर्वेषां प्रवृत्त्यापत्तिः, किंतु यस्य पुरुषस्य कर्मप्राशस्त्यज्ञानं भवति तस्यैव तत्फलरागादिना तत्र प्रवृत्तिरित्याशयेनाह—इति कर्तव्यतेत्यादिना । कर्तव्यस्येतिप्रकार इतिकर्तव्यता, इतिशब्दस्य प्रकारवाचकत्वात् । प्रकारश्च सामान्यस्य भेदको विशेष इत्यर्थः । तथा च कर्तव्यसामान्यस्य भेदकः कर्तव्यविशेष एव प्राशस्त्यरूपः शब्दभावनायामितिकर्तव्यतात्वेनान्वयं लभते, तच्च कर्तव्यसामान्यं लिङादिज्ञानरूपं भावनाकारणमेव, करणगतप्रकाराकाङ्क्षापूरकस्येतिकर्तव्यतात्वात् । लिङादिज्ञानेन भावयेत्कथमित्याकाङ्क्षायां कर्मप्राशस्त्यविशिष्टेनेति प्रकारान्वयात् तस्य च प्राशस्त्यविशेषस्य ज्ञापकोऽर्थवादविशेष एवेति भावः । स चार्थवादः 'स प्रजापतिरात्मनोवपामुदखिद'-दित्यादिः, तं चार्थवादं चतुर्विधविभागेन निरूपयिष्यामोऽर्थवादनिर्णये ।

शाब्द्या विशेषविचारः

ननु किं नाम प्राशस्त्यं यच्छब्दभावनायामितिकर्तव्यतात्वेनान्वेतीति चेत् विधेयतावच्छेदकसामानाधिकरण्येन बलवदनिष्टाननुबन्धित्वे सति क्रियाजन्यदुः(सु)खापेक्षयाऽधिकेष्टजनकत्वं प्राशस्त्यं, तदेव च विध्यर्थवादेषु लक्ष्यते । निषेधार्थवादेषु तु निषेध्यतावच्छेदकसामानाधिकरण्येन क्रियाफलापेक्षयाधिकदुःखसाधनत्वमप्राशस्त्यं लक्ष्यत इति बोध्यम् । लक्षणा च सर्वत्र वाक्ये, लक्षणायां बाधकाभावादर्थवादस्थपदसमुदाये वैकस्मिन्नेव वा पदे भवन्तीतरपदानि तात्पर्यग्राहकाणीत्यनाग्रहः । तच्च प्राशस्त्यादिकमितिकर्तव्यतात्वसंबन्धेन शब्दभावनायामन्वेतीति बहवो वदन्ति । स्वरूपसंबन्धेन धात्वर्थादावेवान्वेतीति केचित् । वस्तुतस्तु प्राशस्त्यं स्वविषयकज्ञानजन्येष्टविषयकोत्कटरागजन्यत्वसंबन्धेन प्रवृत्तावन्वेति ।

**अप्राशस्त्यमपि स्वविषयकज्ञानजन्यानिष्टविषयकोत्कटद्वेषप्रयोज्याभावप्रतियोगित्वसंबन्धेन प्रवृत्तावेवान्वेतीत्यन्यत्र विस्तरः। इत्थं च पुरुषप्रवृत्तिलक्षणार्थभावनाभाव्यको लिङादिज्ञानकरणकः स्वज्ञानकरणको वा स्तुतिनिन्दार्थवादबोधितप्राशस्त्यादीतिकर्तव्यताको लिङादिशब्दस्य व्यापारविशेषः शब्दभावना लिङादिशब्देन लिङ्त्वांशेनोच्यते। तत्र चार्थवादबोधितप्राशस्त्यादिनोपकारं संपाद्य लिङादिज्ञानेन पुरुषप्रवृत्तिलक्षणामर्थभावनां भावयेद्यागविषयप्रवृत्तिलक्षणां कुर्यादिति फलितम्।**

पूर्व प्रकरणों में स्पष्ट हो चुका है कि शाब्दीभावना एक अभिप्राय, प्रवृत्ति या व्यापारविशेष है जिसके द्वारा कोई कार्य सम्पन्न होता है। यहाँ प्रश्न उठता है कि कौन वस्तु उत्पन्न की जाती है, अर्थात् प्रवृत्ति का साध्य क्या है? फिर प्रश्न उठता है कि उस साध्य को सिद्ध करने का साधन क्या है, उसे किससे सम्पन्न किया जा सकता है। तीसरा प्रश्न है कि उस साध्य को सिद्ध करने की रीति क्या होगी? इसको ही सामान्यतः साध्याकांक्षा, साधनाकांक्षा तथा इतिकर्त्तव्यताकांक्षा ( या कथंभावाकांक्षा ) कहते हैं और 'किं भावयेत्' 'केन भावयेत्' 'कथं भावयेत्' शब्दों में व्यक्त करते हैं। यही तीनों शाब्दीभावना के अंशत्रय हैं।

आर्थी भावना शाब्दीभावना का साध्य है। जिस प्रकार से शाब्दी के तीन अंश होते हैं वैसे ही उन्हीं शब्दों द्वारा वाच्य साध्य, साधन तथा इतिकर्त्तव्यतारूप तीन अंश आर्थी के भी होते हैं। ग्रन्थकार के अनुसार इन तीनों अंशों से युक्त आर्थी भावना शाब्दी का साध्य है। आर्थी भावना का स्वरूप और उसके भेद शाब्दी भावना के प्रसङ्ग के बाद ही निरूपित होंगे।

शाब्दी भावना का साध्य आर्थी भावना क्यों है इसका कारण ग्रन्थकार के अनुसार दोनों का एक ही प्रत्यय से बोध होना है। यह पहले ही निरूपित किया जा चुका है कि धातु में लगे एक ही 'त' प्रत्यय के आख्यात एवं लिङ् इन दोनों अंशों से क्रमशः आर्थी तथा शाब्दी भावनाओं का ज्ञान होता है। एक ही प्रत्यय से ज्ञात होने के कारण दोनों का एक ही अभिधान अर्थात् नाम से श्रवण, कथन अथवा ग्रहण होता है। एक ही अभिधान से दोनों के अभिहित होने से दोनों में काफी निकटता हो गयी। इसके अतिरिक्त धातु आदि का अर्थ प्रत्यय के अर्थ से अपेक्षाकृत दूर पड़ जाता है। समानाभिधान श्रुति का अर्थ है--समान अर्थात् एक ही या एक जैसी नाम वाली श्रुति--शब्द या शब्दखण्ड प्रत्यय आदि--ही है अभिधान जिनका। 'यजेत' का 'त' प्रत्यय भी वैदिक पद का अंश होने से श्रुति ही है, वही समानरूप से आख्यात वाच्य आर्थी तथा लिङ् वाच्य शाब्दी का बोधक है। वस्तुतः एक प्रत्ययगम्यता तथा समानाभिधान श्रुति यहाँ समानार्थक है। एक प्रत्ययगम्य होने से शाब्दी तथा आर्थी दोनों भावनाओं में अत्यन्त निकटता होने से शाब्दी भावना को साध्य की अपेक्षा होते ही निकटवर्तिनी आर्थी भावना प्राप्त हो जाती है।

यहाँ समानाभिधान श्रुति के साथ 'एकप्रत्ययगम्य' पद महत्त्वपूर्ण है। क्योंकि 'यजेत' एक पद है जिसमें यज् धातु तथा 'त' प्रत्यय दोनों समानरूप से संनिहित हैं। 'त' प्रत्यय से शाब्दी एवं आर्थी भावनायें ज्ञात होती हैं। एकप्रत्ययगम्य कहने से शाब्दी, आर्थी भावना आदि का ग्रहण होता है, किन्तु एकपदगम्य कहने पर यज् धातु का वाच्य याग भी शाब्दी भावना के उतना ही निकट हो जायेगा जितना कि आर्थी भावना। याग को अपेक्षाकृत दूर सिद्ध करने के लिये ही यहाँ 'एकप्रत्ययगम्य' पद का प्रयोग है न कि 'एकपदगम्य' का।

**संख्या आदि का निराकरण**—यहाँ पर शाब्दी तथा आर्थी भावना को एकप्रत्यय से गम्य कहा गया है, किन्तु वस्तुतः व्याकरण के नियमानुसार 'त' आदि प्रत्ययों से केवल इन दोनों का ही नहीं अपितु संख्या ( वचन ), काल ( वर्तमान, भूत आदि ), तथा पुरुष ( उत्तम, मध्यम एवं अन्य या प्रथम ) का भी बोध होता है। यथा--'गम्' धातु मात्र से इन सबका ज्ञान नहीं होता किन्तु 'तिप्' प्रत्यय विधि में लगाने से 'गच्छेत्' रूप बनेगा जिससे यह व्यक्त होगा कि—

एक ( संख्या ) प्राणी ( प्रथम पुरुष ) वर्तमानकाल में गमन क्रिया ( आख्यात ) करे ( लङ् )। ऐसे ही 'गच्छेतम्' कहने से अन्य अर्थों के साथ तुम दोनों अर्थात् मध्यम पुरुष और द्विवचन का भी ज्ञान होगा। अब प्रश्न है कि एकप्रत्ययगम्य तो काल, वचन और पुरुष भी है, अतः केवल भावनाद्वय की ही समानाभिधान श्रुति नहीं है, उनका भी ग्रहण होना चाहिए।




इस प्रश्न का उत्तर यह कह कर दिया जाता है कि संख्या आदि साध्य बनने के अयोग्य हैं। इनकी अयोग्यता अनुत्पाद्यता है।[1] कहने का अभिप्राय यह है कि वस्तुयें सिद्ध तथा साध्य दो प्रकार की होती हैं। साध्य को सिद्ध किया जा सकता है, असिद्ध अर्थात् साध्य को सिद्ध करने में पुरुष का पुरुषार्थ—धर्मादि की उपलब्धि-निहित होता है, किन्तु सिद्ध वस्तु को साधना पिष्टपेषण मात्र है, निरर्थक है। पुरुष के द्वारा क्रिया साध्य होती है, संख्या आदि नहीं। यह तो पूर्वतः सिद्ध है। उदाहरण के लिये याग सम्पन्न होना है, उसमें क्रिया होती है। कितने व्यक्ति कब लगेंगे उसको सम्पन्न करने के लिये यह निश्चित हो जाता है तब क्रिया शुरू की जाती है। अतः यहाँ अनुत्पन्न होने के कारण क्रिया ही साध्य है, उत्पाद्य है, पुरुष, संख्या और समय पूर्वतः प्राप्त होने से सिद्ध होते हैं। जो स्वतः सिद्ध हैं वे सहायक हो सकते हैं, साध्य नहीं। यही इनकी अयोग्यता है, यही अनुत्पाद्यता और पुरुषार्थत्वहीनता है।

**लिङ् आदि के ज्ञान की करणता**—शाब्दी भावना के करण के रूप में लिङ् आदि का ज्ञान गृहीत होता है। यहाँ करण का अर्थ प्रकृष्ट कारण है। ग्रन्थकार के मतानुसार लिङ्ज्ञानरूप कारण शाब्दी भावना का उत्पादक न होकर मात्र ज्ञापक है। अर्थात् कारण सामान्यतः दो प्रकार के हो सकते हैं। प्रथम तो वह जिससे कोई वस्तु नये रूप में उत्पन्न की जाती है। इसको कारक या उत्पादक कारण कहते हैं, जैसे घटज्ञान के विषय में इन्द्रियार्थसन्निकर्ष, क्योंकि विना चक्षु इन्द्रिय तथा घट के संयोग के घटविषयक ज्ञान उत्पन्न ही नहीं हो सकता। इसी प्रकार दण्ड आदि घट के, कुठार आदि कटाई के कारण हैं। किन्तु अन्धकार में रखे घड़े का दीपक के सहयोग से प्रत्यक्ष होता है। दीपक को लाने से घड़ा उत्पन्न नहीं होता, अपितु पूर्वतः उपस्थित घड़ा ज्ञात हो जाता है। इस उदाहरण में दीपक घट का ज्ञापक कारण हुआ। जहाँ कार्य एवं कारण में उत्पाद्य एवं उत्पादक भाव होता है वहाँ कार्य पहले से विद्यमान नहीं रहता है, वह कारण से उत्पन्न होता है,

१. तयोः ( संख्याकालयोः ) अनुत्पाद्यत्वसम्भवात्—प्रातिपदिका पृ० २०

किन्तु ज्ञाप्यज्ञापक भाव होने पर कार्य पहले से विद्यमान रहता है, नये सिरे से उत्पन्न नहीं किया जाता, अपितु मात्र ज्ञात होता है।

लिङ् आदि का ज्ञान शाब्दी भावना का ज्ञापक कारण है न कि उत्पादक। यदि लिङज्ञान शाब्दी भावना का उत्पादक कारण होता तो वह लिङ् में पहले से विद्यमान रहती और लिङ् का ज्ञान होने पर ही उत्पन्न होती। किन्तु मीमांसकों के अनुसार वेद नित्य हैं, अतः इनके वाक्य, पद, धातु, प्रत्यय आदि सब नित्य हैं। ज्ञात भले न हो, किन्तु नित्य लिंडंश में प्रवर्तना ( शाब्दी-भावना ) विद्यमान रहती ही है। इस प्रकार सिद्ध होता है कि लिङादिज्ञान शाब्दी भावना का ज्ञापक कारण ही है।

यदि लिङादिज्ञान को किसी का उत्पादक माना ही जाये तो वह शाब्दी भावना के भाव्य आर्थी भावना के निर्वर्तक या उत्पादक के रूप में माना जा सकता है। 'शब्दभावनाभाव्यनिर्वर्तकत्वेन वा' यह वाक्यांश जोड़ने का अभिप्राय यही है। इसमें कोई असङ्गति नहीं है क्योंकि आर्थी भावना साध्य होने से उत्पाद्य हो सकती है। आर्थी भावना क्रियारूपा है, अतः उसकी उत्पाद्यता ही अपेक्षित होगी।

**इतिकर्त्तव्यता**—इतिकर्त्तव्यता अथवा कथंभावाकांक्षा भी एक प्रकार का साधन ही है। अर्थ-वाद के द्वारा बोधित कर्म का प्राशस्त्य आदि ही इतिकर्त्तव्यता है। अथवाद वेद का एक भाग है जिसके द्वारा किसी द्रव्य, कर्म अथवा देवता की प्रशंसा की जाती है। इतिकर्त्तव्यता में 'इति' का अर्थ है 'इस प्रकार' और 'कर्त्तव्य' का अर्थ है 'साध्य' अर्थात् उत्पादनीय, दोनों का भाव ही इतिकर्त्तव्यता है। अर्थात् कार्य को करने का प्रकार ही इतिकर्त्तव्यता है। 'इति शब्दः प्रकारवाची। कर्त्तव्यता क्रिया। कर्त्तव्यतायाः प्रकारः इतिकर्त्तव्यता। क्रिया प्रकार इति यावत्। एवमेव तृतीया-ध्यायतृतीयपादे शास्त्रदीपिका। ( प्रतिपादिका पृ० २४ )। साधन से इसका भेद यह है कि साधन सामान्य कारण का बोध कराता है और इतिकर्त्तव्यता साधन को और भी प्रभावशाली बनाने के लिये विशेषण जोड़ देती है। उदाहरणार्थ कहा गया है—'वायव्यं श्वेतमालभेत भूतिकामः'—'वैभव का इच्छुक वायुदेवता के लिये श्वेतपशु का आलम्भन करे।' यहाँ श्वेतपशुद्वारा वायुदेवता को प्रसन्न करना है। इस विषय में अर्थवाद वाक्य है 'वायुर्वै क्षेपिष्ठा देवता'—वायु शीघ्रकारी देवता है। इससे वायु का प्राशस्त्यगुण शीघ्रकारित्व व्यक्त होता है जिससे शीघ्र ही वैभव-प्राप्ति का ज्ञान होता है। इतिकर्त्तव्यता का वैशिष्ट्यसम्पादन इस प्रकार कहा गया है।—

लिङोऽभिधा सैव च शब्दभावना भाव्या च तस्यां पुरुषप्रवृत्तिः।
सम्बन्धबोधः करणं तदीयं प्ररोचना चाङ्गतयोपयुज्यते॥

यहाँ अभिधा शक्ति है, सम्बन्धबोध शक्तिज्ञान है तथा प्ररोचना है स्तुत्यर्थवाद जो अङ्ग के रूप में विधिशक्ति को उत्तम्भित करती है।

## आर्थीभावनालक्षणम्

**( ८ ) प्रयोजनेच्छाजनितक्रियाविषयव्यापार आर्थीभावना, सा चाख्यातत्वांशेनोच्यते, आख्यातसामान्यस्य व्यापारवाचित्वात्।**

## आर्थीभावनाया अंशत्रयम्

**( ९ ) साप्यंशत्रयमपेक्षते—साध्यं साधनमितिकर्तव्यतां च, किं भावयेत्, केन भावयेत्, कथं भावयेदिति। तत्र साध्याकाङ्क्षायां स्वर्गादिफलं साध्यत्वेनान्वेति। साधनाकाङ्क्षायां यागादिः करणत्वेनान्वेति। इतिकर्तव्यताकाङ्क्षायां प्रयाजाद्यङ्गजातमितिकर्तव्यतात्वेनान्वेति।**

( स्वर्ग आदि ) उद्देश्य की इच्छा से होने वाली ( याग आदि ) क्रिया से सम्बद्ध व्यापार आर्थी भावना है। वह ( प्रत्यय के ) आख्यातत्व अंश से व्यक्त होती है क्योंकि सभी आख्यात व्यापार को ही प्रकट करते हैं। उसे ( आर्थी भावना को ) भी तीन अंशों साध्य, साधन और इतिकर्त्तव्यता ( अर्थात् ) किसकी भावना करे, किससे भावना करे और कैसे भावना करे—की अपेक्षा होती है। इनमें से साध्य की आकांक्षा होने पर स्वर्ग आदि फल साध्य के रूप में अन्वित होता है। साधन की आकांक्षा होने पर याग आदि करण के रूप में अन्वित होता है और इतिकर्त्तव्यता की आकांक्षा होने पर प्रयाज आदि अङ्गसमूह इतिकर्त्तव्यता के रूप में अन्वित होता है।

अर्थभावनां लक्षयति—प्रयोजनच्छेत्यादिना। प्रयोजनस्य स्वर्गादिरूपफलस्य येच्छा रागविशेषः 'फलेच्छा साधनमुपसंक्रामती'ति न्यायात् तेन च रागविशेषेण जनितो यो यागादिक्रियाविषयः पुरुषस्य व्यापारविशेषः सार्थीभावनेत्यर्थः। ननु कोऽयं व्यापारो नाम योऽर्थभावनात्वेनोच्यते। तावत्प्रयत्नमात्रं, रथो गच्छतीत्यत्राव्याप्त्यापत्तेः। स्पन्द इति चेत् 'देवदत्तो ग्रामं गच्छति', 'स्वर्गकामो यजेत', 'यागेन स्वर्गं कुर्या'दित्यादौ गमनाद्यनुकूलकृतावव्याप्तेः कृतेश्चेतनधर्मत्वेन तत्र स्पन्दत्वाभावात्, गच्छतीत्यादौ गमनं करोतीति करोतिप्रयोगदर्शनात् स्पन्दत इति स्पन्दसंयोगादर्शनात् स्पन्द इति स्पन्दिप्रयोगादर्शनाच्चेति चेत् केचिदत्राहुः—स्वर्गादिफलेच्छाजनितो यागादिक्रियाविषयः प्रयत्न एव सव्यापारोऽर्थभावनात्वेनोच्यते। न च रथो गच्छतीत्यत्राव्याप्त्यापत्तिः। रथवोढ़ृणामश्वानां प्रयत्नं रथे समारोप्य रथो गच्छतीति प्रयोगोपपत्तेः। येषां मतेऽन्योत्पादनानुकूलव्यापारसामान्यमेवार्थभावना तेषामपि रथे गमन-व्यतिरिक्तस्य व्यापारविशेषस्यानुपलब्धेः रथो गच्छतीति प्रयोगस्यौपचारिकत्वमन्तरेणानिर्वाहात्तस्य तत्त्वं स्वीकर्तव्यम्। स च प्रयत्न आख्यातसामान्येन कथ्यते, 'यजेत पचति गच्छती' त्याद्याख्यातश्रवणे प्रयत्नप्रतीतेः। यागेन कुर्यात्पाकं करोति गमनं करोतीति प्रयत्नार्थककरोतिना आख्यातस्य विवरणदर्शनात्प्रयत्न-एवाख्यातसामान्यस्यार्थो न स्पन्दादिः। प्रयत्नपूर्वकगमनादिकर्तरि गमनं करोति पाकं करोतीति प्रयत्नार्थककरोतिप्रयोगदर्शनात्। वायुवेगादिना स्पन्दमाने त्वयं वायुवेगादिना स्पन्दते न किंचित्करोतीति तत्प्रतिषेधदर्शनाच्चेति।

अन्ये त्वाचार्या आहुः—अन्योत्पादनानुकूलात्मा स व्यापारो योऽर्थभावनात्वेनोच्यते यस्मिन्व्यापारे कृते करणस्य फलोत्पादनसामर्थ्यं भवति तादृशो व्यापार इति यावत्। स एव च व्यापार आख्यातसामान्यस्यार्थः। 'यजेत स्वर्गकाम' इत्याख्यातश्रवणे हि यागेन तथा व्याप्रियेत यस्मिन्व्यापारे कृते यागः स्वर्गजननसमर्थो भवतीति बोधः। कुठारेण छिन्द्यादिति कुठारेण तथा व्याप्रियेत यस्मिन्व्यापारे कृते कुठारश्छेदनसमर्थो भवतीतिवत्। स च व्यापारोऽन्योत्पादनानुकूलत्वेन सामान्येन रूपेणाख्यातादेवावगम्यते पश्चात्तु कथंभावाकाङ्क्षायां विशेषरूपेण क्वचिदुद्यमननिपतनादिरूपेण क्वचित्त्वग्न्यन्वाधानादिब्राह्मण-तर्पणान्तप्रवृत्तिरूपेण चावगम्यते। न च रथो ग्रामं गच्छतीत्यत्राव्याप्तिः, अन्योत्पादनानुकूलव्यापारस्य रथे गमनव्यतिरिक्तस्याभावादिति वाच्यम्। रथस्तथागमनेन व्याप्रियते यस्मिन्व्यापारे कृते गमनेन ग्रामप्राप्तिर्भवतीति प्रतीतेः। कोऽसौ व्यापार इत्याकाङ्क्षायां पूर्वोत्तरावान्तरदेशविभजनसंयोजनरूप इति पश्चादवगम्यते। उद्यम्य निपात्य कुठारेण

छिनत्तीतिवत्पूर्वप्रदेशेन विभज्योत्तरप्रदेशेन च संयोगं लब्ध्वा रथो ग्रामं गच्छतीति प्रत्ययात्। न चात्र गमनमात्रमाख्यातार्थ इति वाच्यम्। 'अनन्यलभ्यो हि शब्दार्थ' इति न्यायात्तस्य धातुलभ्यत्वेनाख्यातार्थत्वायोगात्। एवं चैत्रः प्रयतत इत्यत्रापि चैत्रस्तथा व्याप्रियते यथा प्रयत्नो भवतीति प्रयत्नानुकूलव्यापार एवाख्यातस्यार्थो न तु प्रयत्न एव, प्रयत्नस्य धातुमात्रलभ्यत्वात्। कोऽसौ व्यापार इत्याकाङ्क्षायां पश्चाज्ज्ञानेच्छादिकमवगम्यते। न च रथो गच्छतीत्यादिप्रयोगस्यौपचारिकत्वं स्यादिति वाच्यम्, मुख्ये संभवत्यौपचारिकत्वस्यान्याय्यत्वात्। न च गच्छति गमनं करोति पचति पाकं करोतीति प्रयत्नार्थककरोतिनाख्यातस्य समानार्थकत्वदर्शनात्प्रयत्न एवाख्यातस्यार्थ इति वाच्यम्, चैत्रः प्रयतत इत्यादौ व्यभिचारेण प्रयत्नस्याख्यातार्थत्वासंभवात्, औपचारिकत्वस्य निरस्तत्वाच्च। करोत्यर्थोऽपि व्यापारविशेष एव न तु प्रयत्नः, चैत्रो गच्छति रथो गच्छतीति चेतनाचेतनकर्तृकाख्यातसमानार्थकस्य करोतेः प्रयत्नार्थकत्वासंभवात्, तस्मादन्योत्पादनानुकूलव्यापार एवाख्यातसामान्यस्यार्थ इति सिद्धमिति।

ननु प्रयोजनेच्छाजनितक्रियाविषयव्यापार इति मूलग्रन्थे स्वर्गादिप्रयोजनेच्छाजनितस्य यागादिविषयकव्यापारस्य प्रयत्नत्वमेव कल्प्यते, चेतनव्यापारत्वात्। ततश्च प्रयत्न एवाख्यातार्थ इति चेत्, सत्यम्। तथापि न सर्वत्र प्रयत्नार्थकत्वमाख्यातस्य संभवति रथो गच्छतीत्यादौ व्यभिचारस्य दर्शितत्वात्। तत्र यागादिविषयकपुरुषप्रयत्नादेरपि कृतिशब्दाभिधेयस्यान्योत्पादनानुकूलव्यापारत्वेनैव सामान्याकारेणाख्यातार्थत्वं न तु विशेषरूपेण, विशेषरूपेण तु पश्चादवगमो भवति कोऽसौ व्यापार इति वीक्षायाम्। तस्मात् सर्वत्रान्योत्पादनानुकूलव्यापारसामान्यमेवाख्यातार्थ इति सिद्धम्।

किंच यागादिकरणेन धात्वर्थेन स्वसाधनद्रव्यादिनिष्पादितेन स्वर्गादिफलोत्पत्तौ येयमनुकूलव्यापारस्वरूपा कृतिशब्दाभिधेया फलोत्पादनाऽऽर्थीभावना सेयं न यज्यादिधातूनामन्यतमेन केनचिदप्यभिधीयते, सर्वधात्वर्थानुगतरूपत्वात्। नापि धात्वर्थसामान्यमेव सा। प्रतिधात्वर्थविलक्षणत्वात्। तथा हि—'स्वर्गकामो यजेते'त्यत्र यागेन स्वर्गं भावयेदिति बोधः। तत्र च यागविषयकव्यापारस्य स्वर्गं प्रति विलक्षणमानुकूल्यं भवति। ओदनकामः पचेदित्यत्र च पाकेनौदनं भावयेदिति बोधः। पाकव्यापारस्य चौदनं प्रति विलक्षणमेवानुकूल्यम्। नैरोग्यकामो भेषजपानं कुर्यादित्यत्र भेषजपानेन नैरोग्यं कुर्यादिति बोधः। भेषजपानव्यापारस्य च नैरोग्यं प्रति विलक्षणमेव चानुकूल्यं भवति। तथा च विलक्षणानुकूल्यविशिष्टस्य व्यापारविशेषस्य प्रतिधात्वर्थविलक्षणरूपत्वमेव। अन्यथा फलविभागानुपपत्तिः स्यात्। ततश्च भावनात्वसामान्यं तु भिन्नासु भावनाव्यक्तिष्वनुवर्ततां नाम, नैतावता प्रकृत्यर्थसामान्यं भावना। तस्माद्यज्यादिधात्वर्थाद्विशेषरूपात्सामान्यरूपाच्च भिन्नैवाख्यातप्रत्ययसामान्यार्थभूताऽऽर्थीभावना। ततश्च सा तेनैवोच्यत इत्याशयेनाह—सा चाख्यातत्वांशेनोच्यत इति। तत्र हेतुमाह—आख्यातेत्यादिना। व्यापारवाचित्वादिति। अन्योत्पादनानुकूलव्यापारसामान्यवाचित्वादित्यर्थः।

सा निरुक्तार्थीभावना व्यापारविशेषात्मिका व्यापारविशेषाणां च छिदिभावनारूपव्यापारस्य द्वैधीभावरूपफलादिस्वापेक्षत्ववत्फलादिसापेक्षत्वाद्व्याद्यंशत्रयमपेक्षत इत्याशयेनाह—

साध्यंशत्रयमपेक्षत इति । अपेक्षामभिनयति—किं भावयेदित्यादिना । तत्रेति । साध्यादीनां भावनांशानां त्रयाणां मध्य इत्यर्थः । तस्यां च भावनायां स्वर्गादिफलमेव पुरुषविशेषणमपि साध्यत्वेनान्वेति पुरुषार्थत्वान्नतु धात्वर्थः । समानपदोपात्तोऽप्यपुरुषार्थत्वात्तत्त्वेनान्वयं लभत इत्याह—स्वर्गादिफलमिति । किंच तस्यां पुनः फलभावनायां प्रत्ययवाच्यभूतायामेकपदोपात्तः प्रकृत्यर्थ एव करणत्वेनान्वेति संनिकृष्टत्वात्, न तु पदान्तरोपात्तं द्रव्यादि विप्रकृष्टत्वात् । न च साध्यरूपस्य प्रकृत्यर्थस्य कथं फलसाधकत्वमिति वाच्यम्, द्रव्यादिस्वसाधननिष्पादितस्य साध्यस्यापि प्रकृत्यर्थस्य फलं साधयितुं शक्यत्वादित्युक्तमेवेत्याशयेनाह—यागादिः करणत्वेनान्वेतीति । किंच कुठारेण छिनत्तीत्यादौ कथमिति कथंभावाकाङ्क्षायामुद्यम्य निपात्येत्युद्यमननिपतनादेरितिकर्तव्यतात्वेनान्वयवद्यागेन स्वर्गं भावयेदित्यत्रापि कथमिति कथंभावाकाङ्क्षायामग्न्यन्वाधानप्रयाजावघातादिभिरुपकारं संपाद्येति प्रयाजाद्यङ्गजातमितिकर्तव्यतात्वेनान्वयं भजत इत्याशयवानाह—इतिकर्तव्यताकाङ्क्षायामित्यादिना । कथंभावाकाङ्क्षापूरकत्वमितिकर्तव्यतात्वम् । निरुक्तो वेतिकर्तव्यताशब्दार्थो बोधः । भवति च प्रयाजादिषु लक्षणसमन्वयो यागेन स्वर्गं कुर्यादिति । ततः कथमिति कथंभावाकाङ्क्षायां प्रयाजादिभिरुपकारं संपाद्येति कथंभावाकाङ्क्षापूरणात्, कर्तव्यसामान्यस्य यागादिरूपस्य भेदकविशेषरूपत्वाच्च । तच्च प्रकरणप्रमाणनिरूपणावसरे प्रदर्शयिष्यामः । तथा च 'यजेत स्वर्गकाम' इत्यत्राग्न्यन्वाधानावघातप्रयाजादिभिरुपकारं संपाद्य यागेन स्वर्गं भावयेत् । स्वर्गं कुर्यादिति वाक्यार्थः । यथौदनकामः पचेदित्यत्र लिङा भावनाभिधीयते, तत्र च किं भावयेत् कथं भावयेदिति भाव्याद्याकाङ्क्षायां तृणफूत्कारादिभिरुपकारं संपाद्य पाकेन तेजःसंयोगलक्षणेनौदनं भावयेदोदनं कुर्यादिति भाव्याद्यन्वयेन वाक्यार्थः संपद्यते तद्वदिति ।

ननु पूर्वं साध्यस्यापि यागादेः स्वसाधननिष्पादितस्य सतोऽपूर्वनिष्पादकत्वं संभवति तद्द्वारेण च विनश्वरस्याप्यचिरं स्वर्गसाधनत्वमितरस्य संभवतीत्युक्तम् । तच्च यागेन कथमुत्पाद्यते तत्र वक्तव्यं—यागेन स्वर्गं कुर्यादिति तावत्फलवाक्येन यागस्य फलसाधनत्वं बोध्यते । तत्र च कथं विनश्वरेण स्वर्गः कर्तव्यस्तस्य कालान्तरभावित्वादित्याकाङ्क्षायामपूर्वं निष्पाद्येत्युच्यते । पुनः कथमपूर्वं निष्पादनीयमित्याकाङ्क्षायां प्राच्योदीच्याङ्गविशिष्टस्य यागस्यानुष्ठानप्रकारेणेत्युच्यते । तच्चापूर्वं दर्शपूर्णमासयोरनेकविधं—फलापूर्वं समुदायापूर्वमुत्पत्त्यपूर्वमङ्गापूर्वं चेति । तत्र येन स्वर्गः क्रियते तत् फलापूर्वमित्युच्यते फलजनकत्वात्, तच्च समुदायापूर्वेण जन्यते । समुदायश्च द्विविधः—अमावास्यायां त्रयाणां यागानामेकः समुदायः, पौर्णमास्यां च त्रयाणां यागानामपरः समुदायश्च, ताभ्यां जन्यं यदपूर्वं तत्समुदायापूर्वमित्युच्यते । समुदाययोश्च भिन्नकालवर्तिनोः संहत्य फलापूर्वजननायोगात्तज्जननाय समुदायद्वयजन्यस्यापूर्वद्वयस्यावश्यं कल्पनीयत्वात् । अमावास्यायां समुदायस्तु 'ऐन्द्रं दध्यमावास्यायामैन्द्रं पयोऽमावास्याया'मिति वाक्यविहितौ सांनाय्ययागौ 'यदाग्नेयोऽष्टाकपाल' इति वाक्यविहित आग्नेयश्च तेषां त्रयाणां भवति । पौर्णमास्यां समुदायस्तु—'यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवती'त्याग्नेययागो विहितः, 'ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छ'दित्यग्नीषोमीययागो विहितः । 'उपांशुयाजमन्तरा यजती'त्युपांशुयागः 'तावब्रूतामग्नीषोमावाज्यस्यैव तावुपांशुपौर्णमास्या'मिति

वाक्येन विहितः। तेषां त्रयाणां च भवति, तयोस्तु समुदाययोर्मध्य एकसमुदायवर्तिनां त्रयाणां यागानां भिन्नक्षणवर्तिनां संहत्य समुदायद्वयजन्ययोरपूर्वयोरेकापूर्वजननायोगात्तज्जननाय यागत्रयजन्यानि त्रीण्युत्पत्त्यपूर्वाणि कल्पनीयानि। तेषां चाङ्गोपकारमन्तरेणानुत्पत्तेरङ्गानां चानेकक्षणवर्तित्वेन संहत्योत्पत्त्यपूर्वारम्भायोगात्तदारम्भायाङ्गापूर्वाणि संनिपत्योपकारकादीनि कल्पनीयानि। तत्र चाऽयं विभागः। संनिपत्योपकारकाण्यवघातप्रोक्षणादीनि द्रव्यदेवतासंस्कारद्वारेण यागस्वरूपस्यैवातिशयजननेन यागोत्पत्त्यपूर्वोत्पत्तौ, तद्द्वारेण हि फलापूर्वे च व्याप्रियन्ते। संनिपत्योपकारकाङ्गापूर्वे यागोत्पत्त्यपूर्वस्य प्रयोजकत्वमिति केचित्। फलापूर्वस्यैव तादृशाङ्गापूर्वेऽपि प्रयोजकत्वं स्वीकर्तव्यम्, तस्यैव सर्वापूर्वप्रयोजकत्वे लाघवादित्यन्ये। आरादुपकारकाणि तु प्रयाजादीनि यागोत्पत्त्यपूर्वेभ्यः सकाशाज्जायमानं फलापूर्वमेव साक्षाज्जनयन्तीति। एवं प्रकारभेदेऽपि सर्वाण्यङ्गान्यपूर्वोत्पत्तावनुग्राहकाणीत्येकरूपेणैवेत्थंभावेन गृह्यन्ते। इत्थंभाव इतिकर्तव्यता चानर्थान्तरम्। तथा च प्रधानानामाग्नेयादीनां षण्णां स्वरूपेण सर्वाङ्गसाहित्याभावेऽपि स्वस्वोत्पत्त्यपूर्वद्वारेण सर्वाङ्गसाहित्यं तेषामङ्गानां, प्रयाजादीनामपि स्वरूपेण सर्वप्रधानसाहित्यासंभवेऽपि स्वस्वोत्पत्त्यपूर्वप्रधानसाहित्यं चोपपन्नम्। तच्च साहित्यं विहितमिति वक्ष्यते। एवं च यदेव प्रधानोत्पत्त्यपूर्वाणां प्रयाजाद्युत्पत्त्यपूर्वैः साहित्यं तदेव प्रधानानामङ्गवैशिष्ट्यरूपं साङ्गत्वमित्युच्यते। तस्मात्ताभ्यां समुदायापूर्वाभ्यामाग्नेयादिप्रधानोत्पत्त्यपूर्वत्रितयत्रितयजन्याभ्यां प्रयाजाद्यङ्गापूर्वसहिताभ्यां फलजनकीभूतं फलापूर्वापरनामकं महापूर्वं जन्यते, तेन च फलमिति यागस्यापूर्वद्वारेण फलसाधनत्वमुपपन्नतरं भवतीति सर्वं समञ्जसम्।

पर्यायत्वप्रसक्त्यैकस्यैव पदस्यैकापूर्ववाचकत्वम्। ननु 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत, चित्रया यजेत पशुकामः, उद्भिदा यजेत पशुकामः, ज्योतिष्टोमेन स्वर्गकामो यजेते'त्यादिषु सर्ववाक्येषु कस्य पदस्यापूर्वप्रतिपादकत्वमिति वक्तव्यम्। न च भावनावाचकस्य यजतिददात्याख्यातान्तस्यापूर्ववाचकत्वं भवत्विति वाच्यम्, अपूर्वस्य साध्यत्वेन प्रधानत्वात्सर्वेषां पदानां प्रधानान्वयलाभाय तेषां सर्वेषामेव क्रियाकारकसंबन्धमनादृत्य प्रत्येकमपूर्ववाचकत्वात्, अन्यथा तेषां प्रधानान्वयित्वं न स्यादिति चेत्। अत्रोच्यते—अपूर्वस्यात्यन्तादृष्टरूपत्वादेकापूर्वकल्पनयैव वाक्यस्योपपत्तावनेकापूर्वकल्पनायां गौरवप्रसङ्गः स्यात्। सर्वेषां च पदानां तद्वाचकत्वे पर्यायत्वप्रसक्त्यैकस्यैव पदस्यैकापूर्ववाचकत्वं स्वीकर्तव्यं, पदान्तरं तु तद्गुणतयान्वेति, तच्चापूर्ववाचकं पदमाख्यातान्तमेव ननु कर्मनामधेयादिकं, तस्य भावार्थसामानाधिकरण्यादिनाप्युपपत्तेः।

ननु 'सोमेन यजेत', 'हिरण्यमात्रेयाय ददाति तस्मात्सुवर्णं हिरण्यंभार्य'मिति हि श्रुतम्। तत्र च सोमहिरण्यशब्दौ द्रव्यवाचकौ। सुवर्णशब्दस्तु शोभनवर्णरूपगुणवाचकः। तैरेव द्रव्यादिशब्दैरपूर्वमवगम्यते। द्रव्यादीनां सिद्धस्वरूपाणामेव साध्यापूर्वसाधनत्वादिति चेन्न। द्रव्यादिसिद्धस्वरूपाणां यागदानादिरूपभावार्थशेषत्वेनाप्युपपत्तेर्भावार्थस्यैवापूर्वसाधनत्वात्। क्रियां विना द्रव्यादीनां न फलसाधनत्वं संभवति, पचिक्रियामन्तरेण काष्ठस्थाल्यादीनामोदनसाधनत्वादर्शनादित्युक्तमेव। तस्माद्भावनावाचकस्यैवाख्यातान्तपदस्यापूर्वगमकत्वं न द्रव्यादिपदस्येति सिद्धम्।

नन्वेवं भवतु भावनावाचकस्याख्यातपदस्यापूर्वगमकत्वं, भवतु च भावनयाख्यातसामान्यार्थः, तथापि 'सोमेन यजेत, हिरण्यमात्रेयाय ददाति, दाक्षिणानि जुहोती'त्यादिषु वाक्येषु भावनावाचकस्याख्यातस्यैकत्वाद्भावनाया अप्येकत्वं युक्तम्। न च धातुभेदाद्भावनाया भेद इति वाच्यम्। धातोर्भावनावाचकत्वाभावात्तस्य तद्भेदाप्रयोजकत्वादिति चेत्, अत्राभिधीयते-अस्तु तावदाख्यातस्यैव भावनावाचकत्वं तच्चाख्यातं न प्रतिधातुव्यक्त्येकव्यक्तिरूपं भवति। न हि सर्वासां धातुव्यक्तीनामुपर्येकाख्यातप्रत्ययव्यक्तिः श्रूयते। व्याकरणेनापि न धातुसमूहादेकाख्यातव्यक्तिर्विहिता, तस्माद्बहूनामाख्यातव्यक्तीनामेकैकधातुविशेषानुषक्तत्वेनोत्पन्नानां भावनावाचकत्वाद्यागदानहोमभावनाः परस्परं भिद्यन्त इति भावनाभेदे तत्करणस्यापि भावार्थस्यापर्यायशब्दान्तराद्भेदः स्पष्ट एवेति सिद्धम्।

ननु 'समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहाकारं यजती'ति दर्शादिप्रकरणे पञ्च प्रयाजाः श्रूयन्ते, तत्र च पञ्चकृत्वः श्रुते यजतिपदे यजतिददातिजुहोत्यादिषु पूर्वोक्तपदेष्विव धातुभेदाभावात्तदनुषक्ताख्यातस्याप्यभेद एव, ततश्चाख्यातैक्यप्रयुक्तभावनैक्यमपि दुर्वारमिति चेन्न। यजतिपदाभ्यासाद्भावनाभेदस्य स्वीकर्तव्यत्वात्। तस्मात्करणभेदः। अन्यथा कर्मैकत्वेऽभ्यासो निरर्थकः स्यात्। तस्मादविशेषपुनःश्रुतिरूपयजतिपदाभ्यासात्कर्मभेदः सिद्ध इत्यन्यत्र विस्तरः।

ननु 'तिस्र आहुतीर्जुहोती'त्यत्र जुहोतीत्याख्यातं 'समिधो यजती'त्यादिवन्नाभ्यासेनाम्नातं किंतु सकृदेव, ततश्च भावनैक्येन कर्मैक्यमेवेति चेत्, अत्र वक्तव्यम्--किमिदमाख्यातं पदान्तरान्वयनिरपेक्षस्वरूपं सदेव भावनैक्ये प्रमाणमुत पदान्तरान्वयसापेक्षस्वरूपम्? नाद्यः। पदमात्रस्य वाक्यांशरूपस्य स्मारकत्वेन वाक्यकार्यरूपप्रमितिजनकत्वासंभवात्। न द्वितीयः। त्रित्वसंख्यया विशेषितेनाख्यातेन कर्मबहुत्वावगमाद्भावनाबहुत्वावगमे तस्य भावनैक्ये प्रमाणत्वाभावात्। तस्मात् पदाभ्यासाभावेऽपि जुहोत्यर्थे होमे त्रित्वसंख्यान्वयात् परस्परं त्रयो होमा भिद्यन्त इति भावनानां त्रित्वमेवेति सिद्धम्।

ननु 'अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिरेतेन सहस्रदक्षिणेन यजेते'त्यत्र हि प्रकृतं ज्योतिष्टोममेष ज्योतिरित्यादिनाऽनूद्य तस्मिन्सहस्रदक्षिणादानलक्षणो गुणो विधीयत इति नात्र कर्मभेदेन भावनाभेद इति चेन्न, प्रकृतस्य ज्योतिष्टोमस्याथेत्यनेन विच्छेदात्। ततश्च ज्योतिष्टोमप्रकरणे श्रूयमाणानामपि त्रयाणां यागानां ज्योतिष्टोमसंज्ञापेया पृथक्संज्ञात्रयकरणाज्ज्योतिष्टोमाद्भिन्नसंज्ञावशादेव त्रयाणां च परस्परं भेद इति भावनानां भिन्नत्वमिति सिद्धम।

ननु 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिन'मिति हि श्रूयते। तत्र च घनीभूतः पयःपिण्ड आमिक्षा। जलं वाजिनम्। तथा चामिक्षाद्रव्यभाजो ये विश्वेदेवास्तान्वाजिभ्य इत्यनेनानूद्य तत्र वाजिनद्रव्यरूपो गुणो विधीयते। वाजोऽन्नमामिक्षारूपमेषामस्तीति तदुत्पत्तेः। तच्च द्रव्यमामिक्षाद्रव्येण सह समुच्चीयतां विकल्प्यतां वेति चेत्। न। वैश्वदेवयागस्य पूर्वमेवामिक्षारूपगुणावरुद्धत्वेन तत्र वाजिनगुणस्य प्रवेशायोगात्। न हि व्रीहियवयोरिव वाजिनामिक्षयोर्विकल्पः। समशिष्टत्वाभावात्। आमिक्षारूपो गुणस्तु वैश्वदेवयागस्योत्पत्तिवाक्य एव शिष्यते विधीयत इत्युत्पत्तिशिष्टः। वाजिनगुणस्य तूत्पन्ने कर्मणि

विधिः कल्प्यत इत्युत्पन्नशिष्टः। उत्पत्तिशिष्टोत्पन्नशिष्टयोर्मध्य उत्पत्तिशिष्टः कर्मोत्पत्तिकाल एव तदङ्गत्वेन प्रमितत्वात् प्रबलः। उत्पन्नशिष्टस्तु तदनन्तरं प्रमितोऽपि विलम्बितत्वेन दुर्बलत्वात्तत्र प्रवेशमलभमानो वाजिशब्दार्थस्य देवतान्तरत्वमापाद्य तद्देवत्यकर्मान्तरे प्रविशति, तस्माद् द्रव्यदेवतालक्षणस्य रूपस्य भेदात्कर्मभेदेन भावनाया भेद इति सिद्धम्।

ननु 'उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोती' त्यत्र हि न कर्मान्तरभावनाया विधिः, किंतु नित्याग्निहोत्रमनूद्य तत्र मासरूपो गुणो विधीयते प्राप्तत्वादिति चेत्। न, वाक्यभेद-प्रसङ्गात्। तथा हि—किं तदनुवादेन मास एव विधीयते किमुतोपसदोऽपि? न प्रथमः। उपसदामपि नित्याग्निहोत्रेऽप्राप्तानां त्वन्मते विधेयत्वात्। नापि द्वितीयः। प्राप्ते कर्मणि मासोपसद्रूपानेकगुणविधाने वाक्यभेदस्य दुर्वारत्वात्। स चाष्टदोषदुष्टः। दोषांश्चोपरिष्टात् प्रदर्शयिष्यामः। तस्मादपूर्वकर्मविधायकात्कुण्डपायिनामयनरूपात्प्रकरणान्तरान्नित्याग्निहो-त्रधर्मकं तन्नामकं च कर्मान्तरमत्र विधीयत इति कर्मान्तरभावना सिद्धा। तथा च—शब्दान्तराभ्याससंख्यासंज्ञागुणभेदप्रकरणान्तरैः कर्मभेदोऽपि द्वितीयाध्यायस्यार्थो मूले भावना-प्रदर्शनेनैव सूचितो वेदितव्यः। अग्रे वोत्पत्तिविधिनिरूपणेन स ध्वनितोऽस्माभिस्त्वत्रैव निरूपितः। तस्मात् स्वर्गमुद्दिश्य तत्साधनत्वेन स्वर्गकामविधिर्यागादिकं विधत्ते। ततश्च तादृशवेदस्य धर्मादौ प्रामाण्यं निरवग्रहमुपपन्नमिति सर्वं निरवद्यम्।

तस्य च वेदरूपप्रमाणस्य प्रमेयोऽर्थस्त्रिविध इति प्रसङ्गाच्चिन्त्यते—क्रत्वर्थः पुरुषार्थ उभयार्थश्चेति। तत्र प्रयाजादिः प्रोक्षणादिश्च केवलं क्रत्वर्थः। फलं यागादिरूपं तत्करणं च पुरुषार्थः, यथा स्वर्गादिर्दर्शपूर्णमासादिश्च। दध्यादि तूभयार्थं 'दध्ना जुहोती'ति फला-संयुक्तवाक्येन तस्य क्रत्वर्थत्वावगमात्, 'दध्नेन्द्रियकामस्य जुहुया'दिति फलसंयोगपरवाक्येन पुरुषार्थत्वावगमाच्च। एकस्य तूभयार्थत्वे विनियोजकप्रमाणभेदस्य नियामकत्वात्। तथा चोक्तम्—'एकस्य तूभयत्वे संयोगपृथक्त्व'मिति। किंच क्रत्वर्थे प्रयाजादौ क्रतुः प्रयोजकः, पुरुषार्थे च दर्शादौ फलं, प्रयोजकत्वं चानुष्ठापकत्वम्। तथा च विधिर्यदर्थं यदनुष्ठापयति स तत्र प्रयोजकः। यथा दर्शादिविधिः स्वर्गार्थं दर्शादिकमनुष्ठापयतीति स्वर्गादिर्दर्शादौ प्रयोजकः। यथा च प्रयाजादिविधिः प्रयाजादीन्दर्शाद्यर्थमनुष्ठापयतीति दर्शादिः प्रयाजादिषु प्रयोजको दध्यानयनविधिश्च दध्यानयनमामिक्षार्थमनुष्ठापयत्यामिक्षा दध्यानयने प्रयोजिका। वाजिनं तु दध्यानयनानुष्ठानेनामिक्षायां जायमानायामनुनिष्पाद्यमानत्वान्मधुररसस्य चामिक्षायामेव विशेषेणोपलभ्यमानत्वान्न दध्यानयने प्रयोजकमित्यादिका चतुर्थाध्यायार्थ-चिन्ता स्वयमूहितव्या।

शाब्दीभावना का विवेचन पहले किया जा चुका है। यहाँ स्पष्ट कर रहे हैं कि जिस प्रकार शाब्दी भावना को साध्य, साधन एवं इतिकर्त्तव्यता का ज्ञान अपेक्षित होता है, उसी प्रकार इसे भी।

यद्यपि 'भवितुर्भवनानुकूलः' आदि भावना के लक्षण से दोनों भावनाओं का निर्वचन हो जाता है, तथापि स्पष्टता के लिये आर्थी का भी लक्षण स्वतन्त्र रूप में दिया जा रहा है। शाब्दी भावना में भवित्री पुरुष की प्रवृत्ति होती है, भावक लिङ् आदि होता है और उसका व्यापार अभिधा के रूप में लिङादि में निष्ठ होता है। आर्थी भावना में भविता है स्वर्गादि, भावक है स्वर्गकाम आदि पुरुष और उसका व्यापारविशेष हैं यागादि-विषयक प्रवृत्ति अथवा कृतिविशेष। यह दोनों का भेद है। आर्थी भावना के लक्षण के दोनों अंश 'प्रयोजनेच्छाजनित' एवं 'क्रियाविषय' महत्त्व-

पूर्ण है। प्रथम अंश से स्वर्गादि लक्ष्य के प्रति अनुकूलता का ज्ञान होता है और द्वितीय अंश से यह भाव व्यक्त होता है कि आर्थी भावना का व्यापार याग आदि के रूप में नहीं होता है, अपितु वह याग आदि के अनुकूल प्रवृत्ति है।[1]

यहाँ मूल में प्रयुक्त 'आख्यातसामान्य' का अर्थ है 'आख्यातमात्र'। अर्थात् किसी भी क्रियापद के धातु, आख्यात एवं लिङ में से धात्वर्थ साधन का, आख्यात अंश क्रिया का तथा लिङ् करणीयत्व का वाचक है। क्रियापद में व्यापार का बोध केवल आख्यात से होता है। जैसे 'यजेत' में यज् धातु का अर्थ है याग, इसमें लगी 'त' प्रत्यय के आख्यात अंश का अर्थ है 'करना' और लिङ् का अर्थ है 'चाहिये'।




यह क्रिया-व्यापार ही आख्यात का प्राण है। इसके विना आख्यातत्व निरर्थक है। यथा—

'भावनैव हि यत्रात्मा सर्वाख्यातस्य गोचरः।' ( श्लोकवा० वाक्या० ३३० )

साध्य के प्रसंग में 'स्वर्ग आदि फल' में 'आदि' का अर्थ यह है कि स्वर्ग ही एकमात्र फल नहीं है, अपितु विभिन्न व्यक्तियों के विभिन्न उद्देश्य हो सकते हैं जिनके बोधक विधिवाक्य वेदों में है। यथा—पुत्रकाम पुत्रेष्टि याग करेगा, पशुकाम उद्भिद् याग करेगा आदि।

साधन के प्रसङ्ग में यह प्रश्न हो सकता है कि यजधातुरूप प्रकृति का अर्थ होने से याग को ही एक पद में सन्निहित होने के कारण आख्यात का साध्य क्यों न मान लिया जाये, बाहर से स्वर्ग आदि को फल मानने की क्या आवश्यकता है। यहाँ यह उत्तर दिया जाता है कि याग आदि इष्ट नहीं हैं, अपितु उनके लिए वित्तव्यय, परिश्रम आदि कष्ट अपेक्षित होते हैं। अतः कष्ट को इष्ट नही कहा जा सकता, जब कि विधायक प्रत्यय को आनन्दप्रद स्वर्ग आदि ही इष्ट भाव्य के रूप में स्वीकार्य है। कर्तुरीप्सिततमं कर्म ( पा० १।४।४९ ) के अनुसार ईप्सिततम ही कर्म होता है। कर्म ही साध्य होता है। कोई भी व्यक्ति आनन्दपूर्ण स्वर्ग आदि को कष्टसाध्य याग आदि की तुलना में अपना इष्ट मानेगा।[2] दूसरी बात यह है कि यदि स्वर्ग आदि को फल न माना गया तो वाक्य में उनका प्रयोग भी व्यर्थ हो जायेगा, अतः एक ही पद में उपस्थित होने से निकटता के कारण धात्वर्थ को साधन के रूप में स्वीकार किया जाता है। आचार्यों को इसी में लाघव की प्रतीति होती है—

भावनैव हि भाव्येन फलेनान्वेतुमर्हति।
धात्वर्थः करणं तस्यां लाघवात् सन्निकर्षतः॥

यागादि साधन स्वयं स्वर्गादि के साक्षात् साधन नहीं होते हैं, अपितु इनसे उत्पन्न 'अपूर्व' ही मृत्यु के पश्चात् स्वर्ग आदि की प्राप्ति कराता है।

---

१. तथा च भवितुः स्वर्गादिफलस्य यत् भवनं तदनुकूलो भावकस्य स्वर्गादिकामस्य यो व्यापार-विशेषः यागादिक्रियाविषयकप्रवृत्त्याख्यकृतिरूपः सैवार्थी भावनेति पर्यवसितम्। प्रतिपादिका पृ० २३।

२. दुःसाध्यात्मकस्य यागस्य ईप्सिततमस्वरूपकर्मत्वायोगात्, स्वर्गस्य तु आनन्दात्मत्वेन ईप्सित-तमतया कर्मत्वेन अन्वययोग्यत्वात्। मीमांसापरिभाषा, प्रतिपादिका पृ० २४

**प्रयाजाद्यङ्गजातमिति**—प्रयाज आदि को आर्थीभावना की इतिकर्त्तव्यता कहा गया है। प्रयाज दर्शपूर्णमास याग के पूर्व किये जाने वाले यागों का समूह है जिसमें इडयाग, बर्हिष् याग, समिध् याग, तनूनपात याग तथा स्वाहाकार याग आते हैं। हवन किये जाने वाले द्रव्य, प्रसन्न किये जाने वाले देवता, प्रयुक्त होने वाले मन्त्र, आहुति की दिशा आदि का समूह प्रयाज आदि का अङ्ग होता है। उपकारक होने से ये सब इतिकर्त्तव्यता के रूप में स्वीकार्य होते हैं। इनमें से क्रिया की ही इतिकर्त्तव्यता मुख्य है, द्रव्यादि की गौण।[1]

प्रयाज तथा अनुयाज मीमांसा के प्रायः प्रयुक्त शब्द हैं। दर्शपूर्णमास नामक अङ्गी याग के क्रम में इनके मुख्य याग के पूर्व सम्पादित होने वाले वर्णित 'इड, समिध् आदि पाँचों याग प्रयाज कहे जाते हैं। इनके बाद अग्नि, विष्णु, अग्नीषोम तथा इन्द्र-वैमृध—इन चार देवताओं से सम्बद्ध प्रमुख याग किया जाता है। इन प्रधान यागों के बाद विश्वेदेवों के लिए आहुति दी जाती है। इस कर्म को 'स्विष्टकृत' याग कहते हैं। इसके भी बाद में किये जाने वाले तीन याग अनुयाज कहलाते हैं जो पृषदाज्य 'जमे हुए घी' से सम्पन्न किये जाते हैं। जो याग आर्थीभावना के साधन हैं वे अग्न्यन्वाधान, अवघात, प्रयाजों तथा अनुयाजों के समूह से युक्त होते हैं। ये समस्त याग, जो सामूहिक रूप से 'अङ्गजात' कहे जाते हैं, आर्थीभावना की इतिकर्त्तव्यता के रूप में होते हैं।

भावना से सम्बद्ध प्रकरण यहाँ पूर्ण होता है। उसको स्पष्ट करने के लिए यह रेखाचित्र दिया जा रहा है—




१. इडो यजति, बर्हिर्यजति, समिधो यजति, तनूनपातं यजति, स्वाहाकारं यजतीत्येवं पञ्चाहुत्यात्मकमित्यर्थः। अङ्गजातमिति। एतेन अमुकद्रव्येण जुहोति, अमुकदेवतायै जुहोति, अमुक-

(१०) अथ को वेद इति चेत्। उच्यते—अपौरुषेयं वाक्यं वेदः। स च विधि-मन्त्र-नामधेय-निषेधार्थवादभेदात् पञ्चविधः।

यदि प्रश्न हो कि वेद क्या है? तो उत्तर है—(किसी भी दिव्य अथवा अदिव्य) पुरुष के द्वारा न रचे गये वाक्य वेद हैं। वह वेद विधि, मन्त्र, नामधेय, निषेध और अर्थवाद के भेद से पाँच प्रकार का है।

तदेवं सामान्यतः प्रयोजनवदर्थावबोधकत्वेन वेदस्य धर्मे प्रामाण्यं धर्मविधायकत्व-प्रदर्शनेन चोपपाद्येदानीं तस्य विध्यादिरूपविभागेन तत्र प्रामाण्यमुपपादयितुं तल्लक्षणं पृच्छति—अथेति। उत्तरं प्रतिजानीते—उच्यत इति। तत्र सामान्यलक्षणमाह—अपौरुषेयं वाक्यमिति। वेद इति लक्ष्यनिर्देशः तत्र भारतादावतिव्याप्तिवारणायापौरुषेय-मिति विशेषणम्। आत्मादौ तद्दोषवारणाय वाक्यमिति विशेष्यम्। प्रमाणान्तरेणार्थ-मुपलभ्य विनिर्मितत्वं पौरुषेयत्वं तद्भिन्नवाक्यत्वमिति फलितम्। ईश्वरो वेदमपि प्रमाणान्तरेणार्थमुपलभ्य विरचयति। तस्मात्कथं वेदस्य पौरुषेयाद्भिन्नत्वम्? न हि वेदं परमेश्वरस्तदर्थं प्रमाणान्तरेणोपलभ्य विरचयति। वेदाध्ययनं गुर्वध्ययनपूर्वकं वेदाध्ययन-त्वाद्वर्तमानवेदाध्ययनवदित्यनुमानेन वेदस्यापौरुषेयत्वसाधनात्। 'यः कल्पः स कल्पपूर्वक' इति न्यायेन संसारस्यानादित्वात्—परमेश्वरस्य च सर्वज्ञत्वात्परमेश्वरो गतकल्पीय वेदम-स्मिन्कल्पे स्मृत्वोपदिशतीत्येतावन्मात्रेणोपपत्तौ वेदपौरुषेयत्वस्यानौचित्याच्चेति भावः। वेदं विभजते—स चेत्यादिना।

'अथातो धर्मजिज्ञासा' सूत्र की व्याख्या के प्रसङ्ग में धर्म का लक्षण दिया गया था 'वेदप्रतिपाद्यः प्रयोजनवदर्थो धर्मः'। इनमें से प्रत्येक पद का औचित्य भी यथास्थान प्रतिपादित किया गया और पदकृत्य सम्पन्न हुआ। यहाँ प्रश्न हो रहा है कि आखिर वेद ही किसे कहते हैं। यहाँ से आगे पूरे अर्थसंग्रह में वेद तथा इसके विभागों का निरूपण है।

'अपौरुषेयं वाक्यं वेदः' यह वेद का लक्षण दिया गया है। अपौरुषेय तथा वाक्य दोनों पद महत्त्वपूर्ण हैं। अपौरुषेय कहने से पुरुषरचित महाभारत आदि वेद की कोटि में नहीं आते हैं, इनकी प्रामाणिकता वेदाश्रितता के कारण ही है। 'वाक्य' पद का ग्रहण न करने पर 'अपौरुषेयं वेदः' रह जाता और आत्मा आदि तत्त्व जो पुरुषरचित नहीं हैं, वे भी वेद हो जाते। इस प्रकार इन दोनों पदों के प्रयोग से लक्षण में अतिव्याप्ति दोष नहीं आने पाता।

मीमांसक शब्दनित्यतावादी हैं। इनके अनुसार गकार आदि किसी भी वर्ण का उच्चारण करने पर यह वही वर्ण है, इस प्रकार का अनुभव होता है। यह अनुभववाक्य ही गकार की पूर्वस्थिति को सिद्ध करता है। 'मीमांसासूत्र' के प्रथम अध्याय के प्रथम पाद के "नित्यस्तु स्याद्" (१।१।१८) इस सूत्र से शब्द की नित्यता सिद्ध की गई है। इसी प्रकार 'मीमांसासूत्र' के प्रथम अध्याय प्रथम पाद के 'आख्याप्रवचनात्' (१।१।३०) इस सूत्र के द्वारा सिद्ध किया गया है कि वेद के भागविशेष की कठ आदि संज्ञा उन-उन शाखाओं के उत्कृष्ट उपदेशक ऋषियों के नाम के कारण है। 'प्रजापतिर्वा इदमेक आसीत् स तपोऽतप्यत तस्मात्तेपानात् त्रयोदेवा असृज्यन्त अग्निर्वायुरादित्यः। ते तपोऽतप्यन्त तेभ्यस्तेपानेभ्यः त्रयो वेदा असृज्यन्त अग्नेर्ऋग्वेदो वायोर्यजुर्वेद आदित्यात् सामवेद इति तथा अस्य महतो भूतस्य निश्वसितमेतदृग्वेदो यजुर्वेदः सामवेदः" (बृ० उ० २।४।१०) आदि श्रुतिवाक्य तथा—

---

मन्त्रेण जुहोति, प्राङ्मुखो जुहोतीत्यादि श्रुतिबोधिताग्निप्रक्षेप-द्रव्य-देवता-मन्त्र-प्राङ्मुखत्वाद्यङ्ग-मात्रस्य इतिकर्त्तव्यतात्वमुपकारत्वञ्च सिध्यति। तत्र क्रियाया एव इतिकर्त्तव्यतात्वं मुख्यं द्रव्यादेस्तु लाक्षणिकं क्रियासम्बन्धात्। प्रतिपादिका पृ० २४-२५।

स्वयम्भुरेष भगवान् वेदो गीतस्त्वया पुरा।
शिवाद्या ऋषिपर्य्यन्ताः स्मर्तारोऽस्य न कारकाः॥

आदि स्मृति वाक्य मीमांसकों के अनुसार केवल इस तथ्य के प्रतिपादक हैं कि ईश्वर आदि ने पूर्वकालिक वेदों का केवल स्मरण किया है, उनको रचा नहीं है और उनका उच्चारण ऐसे अनायास ढंग से किया जैसे कि श्वास लेने में कोई प्रयास नहीं करना पड़ता। इस तथ्य की पुष्टि में स्मृति[1] तथा पुराण[2] के वाक्य उद्धृत किये जाते हैं। वेद के औरुपेयत्व के विषय में शाब्दीभावना के प्रसङ्ग में 'वैदिकवाक्ये तु पुरुषाभावात्' की व्याख्या में पर्याप्त लिखा जा चुका है।

**स च विधिमन्त्र**—विभिन्न दृष्टियों से वैदिक मन्त्रराशि का विभाजन किया गया है। सायण ने मन्त्र तथा व्याख्या भाग के आधार पर 'मन्त्रब्राह्मणयोर्वेदनामधेयम्' कह कर मन्त्र तथा ब्राह्मण रूप में वेदों को देखा, जब कि वेदव्यास जी ने अध्ययन तथा याग में सुकरता को लक्ष्य करके ऋग्, यजुष्, साम आदि विभाजन किया। यहाँ निरूपित किया जा रहा वेदों का पाँच विभाग 'मीमांसासूत्र' के प्रथम अध्याय के आधार पर है जहाँ वेदों को विधि, अर्थवाद, मन्त्र तथा नामधेय इन चार भागों में विभाजित किया गया है। यद्यपि वहाँ निषेध स्वतन्त्र भाग नहीं है और वह विधि में ही निरूपित है तथापि यहाँ तथा अन्य अनेक मीमांसा के प्रकरण ग्रन्थों में रूप-भेद के कारण निषेध को एक अलग भाग के रूप में ही गृहीत किया गया है।

वस्तुतः वेदमन्त्रों का यह विभाजन उनकी यज्ञों में उपयोगिता के प्रकार पर आधारित है। मीमांसक वेद के किसी भी मन्त्र या मन्त्रांश को निरर्थक नहीं मानते, वे सबको क्रियार्थक ही मानते हैं और इसी में उनकी सार्थकता स्वीकार करते हैं। किन्तु सभी मन्त्र साक्षात् रूप में क्रियार्थक नहीं हैं और क्रिया भी एक जैसी ही नहीं है। कुछ मन्त्र विधान करते हैं कुछ निषेध, कुछ देवता, द्रव्य आदि का स्मरण कराकर ही कृतार्थ हो जाते हैं, कुछ नाम बतला कर तो कुछ प्राशस्त्य का बोध करा कर। मीमांसक इन सभी प्रकारों को मुख्य अथवा गौण रूप में क्रिया का प्रतिपादक ही मानते हैं। ये पाँचों विभाग और भी स्पष्ट रूप से समझ में आ जाते यदि कहा जाता कि वेद में जितने वाक्य हैं वे पाँच प्रकार से क्रिया-सिद्धि करते हैं, अतः उनको पाँच भागों में विभक्त किया जा सकता है। यहाँ इस भ्रम में नहीं पड़ना चाहिये कि वेद के भेद तो ऋग्, यजुष् आदि हैं, ये नये भेद कहाँ से आ गये। वस्तुतः ये वेद के भेद न होकर अंश हैं।

## विधिविभागः

**( ११ ) तत्राज्ञातार्थज्ञापको वेदभागो विधिः। स च तादृशप्रयोजनवदर्थविधानेनार्थवान् यादृशं चार्थं प्रमाणान्तरेणाप्राप्तं विधत्ते—यथा 'अग्निहोत्रं जुहुयात्स्वर्गकाम' इति विधिर्मानान्तरेणाप्राप्तं स्वर्गप्रयोजनवद्धोमं विधत्ते, अग्निहोत्रहोमेन स्वर्गं भावयेदिति वाक्यार्थबोधः।**

इन ( पञ्चविध विभागों ) में से ( अन्य प्रमाणों से ) अज्ञात इष्ट का ज्ञान कराने वाला वेद का अंश विधि है। वह ( विधि ) उस प्रकार के प्रयोजनवान् अर्थ का विधान करने से सार्थक है जिस प्रकार का विषय ( उस के अतिरिक्त ) किसी दूसरे प्रमाण से उक्त नहीं होता। जैसे 'अग्निहोत्रं जुहुयात् स्वर्गकामः' यह विधि दूसरे प्रमाण से अबोधित स्वर्गरूपी प्रयोजन

---

१. न कश्चित् वेदकर्त्ता च वेदस्मर्त्ता पितामहः। तथैव धर्मं स्मरति मनुः कल्पान्तरान्तरे॥ परा०स्मृ०
अनादि निधना ह्येषा वागुत्सृष्टा स्वयंभुवा। आदौ वेदमयी दिव्या यतः सर्गप्रवृत्तयः॥

२. अस्य वेदस्य सर्वज्ञः कल्पादौ परमेश्वरः। व्यञ्जकः केवलं विप्राः नैव कर्त्ता न संशय॥
मत्स्यपुराणम्

से युक्त होम का विधान करता है। 'अग्निहोत्र होम से स्वर्ग की भावना करे' यह अर्थ (उक्त वाक्य का) समझना चाहिये।

**तत्र विधिं लक्षयति--तत्रेत्यादिना। तत्र पञ्चविधेषु वेदभागेषु मध्य इत्यर्थः। अज्ञातेति। अज्ञातस्य प्रयोजनवतोऽर्थस्य यागादिनामकस्य ज्ञापकत्वं विधित्वमित्यर्थः। तदेवाह--स चेत्यादिना। स विधिर्यादृशं प्रमाणान्तरेणाप्राप्तं भवति तादृशमर्थं विधत्ते, तेन चाज्ञातप्रयोजनवदर्थविधानेनार्थवानिति योजना। तत्रोदाहरणमाह--यथाग्निहोत्रमिति। गुणविधिस्तु मानान्तरेणाप्राप्तं गुणमात्रं विधत्ते।**

यहाँ विधि के लक्षण में प्रयुक्त 'अज्ञात' एवं 'अर्थ' शब्द महत्त्व के हैं। 'अज्ञात' का अर्थ है प्रत्यक्ष, अनुमान, उपमान, अर्थापत्ति तथा अनुपलब्धि प्रमाणों से न जाने गये। अर्थात् विधिवाक्य से जिस विषय का ज्ञान होता है उसका ज्ञापक एकमात्र वही वेदवाक्य होता है, अन्यत्र कहीं उसका बोधक प्रमाण नहीं होता है, अतः सम्बद्ध विषय का ज्ञान चर्चित वेदवाक्य के अतिरिक्त किसी दूसरे वेदवाक्य से भी नहीं होता। इस प्रकार विधि-बोध्य विषय का ज्ञान जहाँ एक ओर किसी दूसरे प्रमाण से नहीं होता वहीं इससे पूर्व भी नहीं होता है। दोनों बातें लगभग समानार्थक हैं क्योंकि जब वाक्य-विशेष के अतिरिक्त विषय का बोधक कोई प्रमाण ही मान्य नहीं है, तब उस वाक्य तक पहुँचे बिना पहले इसका ज्ञान संभव हो कैसे होगा। इसी बात को ग्रन्थकार ने अगले वाक्य में समझाते हुये 'प्रमाणान्तरेण अप्राप्तम्' आदि शब्दों में व्यक्त किया है।

यहाँ 'अर्थ' पद का अभिप्राय केवल ऐसा ही विषय नहीं है जो श्येन आदि की भाँति अनिष्ट न हो, अपितु इसे 'प्रयोजनवान्' भी होना चाहिये। 'प्रयोजनवान् अर्थ' को ही धर्म पहले कहा जा चुका है, जिसमें विधि के वेदवाक्य होने से 'वेदप्रतिपाद्यत्व' भी आ जाता है। अभिप्राय यह हुआ कि विधिभाग धर्म का ही प्रतिपादक होता है।

उदाहरण के लिये 'अग्निहोत्रं जुहुयात् स्वर्गकामः' लिया गया है। इस वाक्य में स्वर्ग प्राप्ति को लक्ष्य करके अग्निहोत्र का विधान किया गया है। अग्निहोत्र ऐसा विषय है जो स्वर्ग के साधन के रूप में अन्य किसी प्रमाण से कथित नहीं है। पूर्वतः उसका ज्ञान नहीं हुआ है क्योंकि प्रत्यक्ष आदि अन्य प्रमाण इसके पूर्व अग्निहोत्र की सूचना नहीं देते। यह केवल वेदवाक्य से ही ज्ञेय है। यद्यपि याग आदि त्याग आदि के रूप में लौकिक प्रमाण प्रत्यक्ष आदि से भी सिद्ध होते हैं किन्तु स्वर्ग आदि इष्ट के साधन के रूप में इनका ज्ञान इदंप्रथमतया वेद से ही होता है।[1] वेदों से जान करके ही लोग व्यवहार में याग को स्वर्ग का साधन कहते हैं। अज्ञात अर्थ होने के साथ ही अग्निहोत्र प्रयोजनवान् भी है, क्योंकि इसका प्रयोजन 'स्वर्ग' है। इस प्रकार 'अग्निहोत्रं जुहुयात् स्वर्गकामः' यह एक विधि वाक्य है क्योंकि इसमें अग्निहोत्र का विधान है जो अज्ञात तथा प्रयोजनवान् अर्थ है। 'स च तादृश'-आदि से 'विधत्ते' तक वाक्य 'अज्ञातार्थ०' आदि की स्पष्ट व्याख्या है। विधि वाक्य के समस्त पदों के प्रतिपाद्य का सर्वांश में नहीं अपितु अज्ञात अंश का ही प्रतिपादन करता है।

'अग्निहोत्रहोमेन स्वर्गं भावयेत्' यह वाक्य 'अग्निहोत्रं जुहुयात् स्वर्गकामः' का मीमांसकों के अनुसार अर्थ है। इस अर्थरीति से यह व्यक्त होता है कि द्वितीया में रहने पर भी अग्निहोत्र तृतीयान्त रूप में साधन का बोधक है जिसका साध्य स्वर्ग है। इस प्रकार का अर्थ करने से साध्य, साधन आदि का ज्ञान सरलता से हो जाता है।

अग्निहोत्र दो यागों का नाम है जो प्रतिदिन प्रातः एवं सायं क्रमशः सूर्य तथा अग्नि को लक्ष्य

१. यागादेस्त्यागत्वादिप्रकारेण लौकिकप्रमाणसिद्धत्वेऽपि स्वर्गादिरूपेष्टसाधनत्वेन प्रागप्रतीतत्वात्। प्रतिपादिका पृ. २७।

कर सम्पादित किये जाते हैं। ये कर्म यावज्जीवन विहित हैं।[1] सामान्यतः शब्द को देखने से लगता है कि मात्र अग्नि में हवन ही अग्निहोत्र है।

**( १२ ) यत्र कर्म मानान्तरेण प्राप्तं तत्र तदुद्देशेन गुणमात्रं विधत्ते—यथा 'दध्ना जुहोती'त्यत्र होमस्याग्निहोत्रं जुहुयादित्यनेन प्राप्तत्वाद्धोमोद्देशेन दधिमात्र-विधानं, 'दध्ना होमं भावयेदि'ति। यत्र तूभयमप्राप्तं तत्र विशिष्टं विधत्ते—यथा 'सोमेन यजेते'त्यत्र सोमयागयोरप्राप्तत्वात् सोमविशिष्टयागविधानम्। सोमपदे मत्वर्थलक्षणया सोमवता यागेनेष्टं भावयेदिति वाक्यार्थबोधः।**

**न चोभयविधाने वाक्यभेदः, प्रत्येकमुभयस्याविधानात्, किन्तु विशिष्टस्यैक-स्यैव† विधानात्।**

जहाँ कर्म दूसरे प्रमाण से सिद्ध होता है वहाँ उसी ( प्रमाणान्तर से प्रतिपादित ) कर्म को लक्ष्य करके केवल गुण—अप्रधान अथवा अङ्ग—का विधान ( विधिवाक्य ) करता है। जैसे—'दध्ना जुहोति।'—दधि से होम करता है—इस ( विधिवाक्य ) से ( निर्दिष्ट ) होम की 'अग्निहोत्रं जुहुयात्' इस वाक्य से प्राप्ति होने के कारण होम को लक्ष्य करके ( अङ्गभूत ) दधिमात्र का विधान होता है, ( और अर्थ होता है ) 'दधि से होम की भावना करे'। जहाँ ( अङ्गी तथा अङ्ग ) दोनों प्राप्त नहीं होते हैं वहाँ ( विधिवाक्य से ) विशिष्ट का—गुण से युक्त कर्म का, दोनों का—विधान होता है। यथा 'सोमेन यजेत' इस वाक्य से सोम एवं याग दोनों के ( प्रमाणान्तर से ) प्राप्त न होने के कारण सोम से युक्त याग का विधान होता हैं। सोमपद में मत्वर्थ लक्षणा से 'सोमयुक्त याग के द्वारा इष्ट ( स्वर्ग आदि ) की प्राप्ति करे' यह वाक्य का अर्थ ज्ञात होता है। दोनों का विधान करने पर वाक्यभेद नामक दोष नहीं होगा, क्योंकि यहाँ दोनों का अलग-अलग विधान नहीं किया जा रहा है, अपितु विशिष्ट एक का ही विधान है।

प्रधानकर्मणस्तु मानान्तरेण प्राप्तस्यानुवाद एवेत्याह—यत्र कर्मेत्यादिना। उभय-मिति। शेषशेषिलक्षणमुभयमित्यर्थः। विशिष्टमिति। शेषविशिष्टं शेषिणमित्यर्थः। तत्रो-दाहरणमाह—यथा सोमेन यजेतेति। ननु सोमरूपस्यैव यागस्यात्र विधिरस्तु किं विशिष्ट-विधानेनेत्याशङ्क्य सोमस्य द्रव्यत्वेन यागत्वासंभवात् सोमपदे मत्वर्थलक्षणास्वीकारेण विशिष्टस्यैव विधेयुक्तत्वान्नैवमित्याह—सोमपदे इत्यादिना।

ननु शेषशेषिलक्षणस्योभयपदार्थस्य विधाने वाक्यभेदः स्यादेव। न च स इष्ट इति वाच्यम्। यत्र वाक्यभेदस्तत्राष्टदोषप्रसङ्गात्। तथा हि—'व्रीहिभिर्यजेत यवैर्वे'त्यत्र। तत्र च प्रथमप्रयोगे व्रीह्यनुष्ठाने यवशास्त्रप्रामाण्यस्य स्वार्थानुष्ठापकत्वरूपस्य परित्यागः। स्वार्थाननुष्ठापकत्वरूपस्याप्रामाण्यस्य च स्वीकारो भवति। ततो द्वितीयप्रयोगे यवानुष्ठाने तु पूर्वपरित्यक्तस्य यवशास्त्रप्रामाण्यस्य स्वीकारः, स्वीकृतस्य च तदप्रामाण्यस्य परित्यागश्चेति यवशास्त्रे चत्वारो दोषा भवन्ति। तथा प्रथमप्रयोगे यवानुष्ठाने व्रीहिशास्त्रप्रामाण्यस्य स्वार्थानुष्ठापकत्वलक्षणस्य परित्यागः। स्वार्थाननुष्ठापकत्वस्वरूपस्य चाप्रामाण्यस्य स्वीकारः। ततो द्वितीयप्रयोगे व्रीह्यनुष्ठाने तु व्रीहिशास्त्रप्रामाण्यस्य पूर्वं परित्यक्तस्य स्वीकारः स्वी-

---

१. अग्निसूर्यदेवताकस्य सायंप्रातःकालयोर्नियमेन अनुष्ठेयस्य कर्मणः अग्निहोत्रम् इति यौगिकं नामधेयम्। जैमिनिन्यायमालाविस्तर पृ० ४५, The Arthasamgraha पृ० ९८ से उद्धृत।

† विशिष्टस्यैव-पाठा०।

कृतस्य च तदप्रामाण्यस्य परित्यागश्चेति व्रीहिशास्त्रे चत्वारो दोषा भवन्तीत्यष्टदोषदुष्टो विकल्पो यथा व्रीहियववाक्ये प्रसिद्धस्तथाऽत्रापि स्यात्।

न च तद्वदत्रापीष्ट एवेति वाच्यम्। तत्र व्रीहियवयोः पुरोडाशरूपैककार्यकारित्वेन विकल्पस्येष्टत्वाद् गत्यन्तराभावाच्च। प्रकृते तु गुणविधिमात्रस्वीकारेणाप्युपपत्तौ नोभयविधिः साधुरित्याशङ्क्य परिहरति—न चेत्यादिना। यद्वा,—ननु यागेनेष्टं भावयेत्सोमेन च यागं भावयेदित्यावृत्त्योभयविधावावृत्तिलक्षणो वाक्यभेदः स्यात्। तदा तु युगपत्तन्त्रेण यागेनेष्टं भावयेत्सोमेन यागं भावयेदित्युभयविधानं तदा तु विरुद्धत्रिकद्वयप्रसङ्ग इत्याशङ्क्य परिहरति—न चेत्यादिना। एकवाक्यस्य प्रत्येकमुभयपदार्थे व्यापारभेदेनोभयविधायकत्वे वाक्यभेदो भवति तथाऽत्रास्वीकारादित्यर्थः। ननु विधेयस्योभयत्वे तद्विधायकवाक्यस्यापि व्यापारभेदेनैव तद्विधायकत्वं संभवति नान्यथेति शङ्कते—किन्त्विति। विशिष्टस्यैकरूपत्वेन विधेयस्योभयत्वासिद्धेर्न व्यापारभेदेन तद्विधानं ततश्च न वाक्यभेदप्रसङ्ग इति परिहरति—विशिष्टस्येति। विशिष्टविधौ विशेषणविधेरार्थिकत्वेन श्रूयमाणविधिना गुणस्य पृथगविधेयत्वादिति भावः।

'अग्निहोत्रं जुहुयात् स्वर्गकामः' वाक्य द्वारा प्रमाणान्तर से अप्राप्त अग्निहोत्र की स्वर्गसाधनता का विधान है। यहाँ कोई विवाद नहीं, किन्तु कुछ प्रसङ्ग ऐसे भी हैं जहाँ कर्म का उल्लेख दूसरे प्रमाण अथवा वाक्य से सम्पन्न रहता है। वहाँ कर्म की प्राप्ति होने से दूसरे तत्सम्बद्ध वाक्य में विधित्व कैसे सम्भव होगा, क्योंकि विधि तो पूर्ववर्ती नियम के अनुसार अज्ञात का ज्ञापक ही हो सकता है। ऐसी स्थिति में प्रधान कर्म के बोधक मुख्य विधिवाक्य से भिन्न वाक्य के द्वारा प्रधान कर्म रूप अर्थ नहीं, अपितु उसका सहायक ( अङ्गरूप ) गृहीत होता है। सहायक, अंग, शेष, तथा गुण सभी समानार्थक, हैं और प्रधान से भिन्न अप्रधान के वाचक है।

उदाहरणार्थ, 'दध्ना जुहोति' वाक्य को लिया जाता हैं। इस वाक्य से आये 'जुहोति' पद की 'हू' धातु से होमरूप अर्थ भी निकल रहा है, किन्तु इस होम की प्राप्ति इस वाक्य से न मानकर प्रधान कर्म बोधक 'अग्निहोत्रं जुहुयात्' वाक्य से ही विहित है। ऐसी दशा में होमरूप कर्म की प्राप्ति दूसरे वाक्य से होने के कारण 'दध्ना जुहोति' में विधित्व नहीं होना चाहिये। किन्तु सिद्धान्त पक्ष यह हैं कि जहाँ ऐसी स्थिति होती है वहाँ परवर्ती वाक्य से पूर्वोक्त प्रधान कर्म का ग्रहण न करके उससे सम्बद्ध किन्तु अज्ञात अङ्ग का ग्रहण किया जाता है। ये अङ्गभूत गौणकर्म प्रधान कर्म के सम्पादक होते हैं। इस प्रकार के वाक्यों का अर्थ 'दध्ना इष्टं भावयेत्' आदि नहीं लिया जाता हैं, ऐसा अर्थ तभी हो सकता है जब 'दधि' प्रधान साधन हो, किन्तु ऐसा है नहीं, अतः 'दधि' को पूर्वतः प्राप्त 'होम' का अङ्ग स्वीकार किया जायेगा, और अर्थ होगा 'दध्ना होमं भावयेत्' अर्थात् दधिरूप अङ्गद्रव्य से होमरूप प्रधानकर्म को सम्पन्न करना चाहिये।

यद्यपि अज्ञात प्रधानकर्म का बोधन 'दध्नाजुहोति' सदृश वाक्यों से नहीं होता, और उसका ज्ञापन दूसरे वाक्य से होता भी है, तथापि 'दध्ना०' आदि में विधित्व की हानि नहीं होती। इस प्रकार के वाक्यों से प्रधान अज्ञात कर्म का ज्ञापन न होने पर भी अज्ञात अङ्गों का तो ज्ञापन होता ही है, अतः अङ्गमात्र का ज्ञान नये सिरे से कराने पर भी इनमें अज्ञातज्ञापकत्व रहने से विधित्व रहता ही है।

ये उदाहरण हुए उन वाक्यों के जिनमें किसी से प्रधान कर्म का प्रथमतया ज्ञान होता है और किसी से अङ्ग का, किन्तु अब ऐसे वाक्य को उद्धृत किया जा रहा है जिससे प्रधान तथा अङ्ग, दोनों कर्मो का ज्ञापन एक साथ होता है। इस प्रकार के वाक्य से ज्ञाप्य अङ्गी एवं अङ्ग का ज्ञान इससे भिन्न किसी वाक्य से नहीं होता। यहाँ प्रधान तथा गौण कर्मों के बोधक पृथक्-पृथक् वाक्य नहीं

होते। अतः जिस वाक्य से प्रधान तथा गौण दोनों कर्मों का ज्ञान एक साथ विशेष्य एवं विशेषण के रूप में होता है, उसको विशिष्टविधि कहते हैं।

**विशिष्टविधि**—'सोमेन यजेत' वाक्य 'दध्ना जुहोति' के अत्यन्त समान प्रतीत होता है, किन्तु वेदों से प्राप्त परिस्थिति के अनुसार 'दध्ना जुहोति' एक ऐसे याग से सम्बद्ध है जिसकी प्राप्ति 'अग्निहोत्रं जुहुयात्' से होती है, किन्तु 'सोमेन यजेत' वाक्य किसी भी पूर्वतः प्राप्त कर्म से सम्बद्ध नहीं है, इसकी सहायक सामग्री का बोधक भी कोई पृथक् वाक्य नहीं हैं। परिणामतः इस वाक्य से प्रधान-कर्म याग तथा उसके सम्पादक द्रव्य दोनों का एक साथ ग्रहण हो रहा है। 'सोमेन यजेत' से ऐसे याग का ज्ञान होता है जिसको सोमपदार्थ से सम्पन्न होना है। इस वाक्य से गुण विशिष्ट यज्ञादि कर्म का विधान होने से इसको विशिष्टविधि कहा जाता है।

**लक्षणा का ग्रहण**—इस प्रकार इस वाक्य का अर्थ होगा 'सोमवता सोमविशिष्टेन वा यागेन इष्टं भावयेत्।' किन्तु यहाँ यह प्रश्न उपस्थित होता है कि 'सोम' पद से 'सोमवत्' अर्थ की प्रतीति कैसे हो सकती है? इसका स्पष्ट उत्तर है कि चूँकि वाक्य में सोमपद का अर्थ सोमनामक द्रव्य-विशेष अथवा सोमनामक याग ग्रहण अभिधा से करने पर प्रयोजन की सिद्धि नहीं होती, अभिधा से प्राप्त मुख्य अर्थ का बाध होने पर सङ्गति के लिए लक्षणा का अवलम्बन करना पड़ेगा। अतः लक्षणा के द्वारा सोमपद का अर्थ 'सोमवता' लेना पड़ेगा न कि 'सोमेन यागेन' अथवा 'सोमेन द्रव्येण'। इस प्रकार का अर्थग्रहण व्यवहार में देखा जाता है। उदाहरणार्थ, किसी स्थान पर उपद्रव होने पर बल्लम आदि शस्त्रों से युक्त आरक्षियों के उपस्थित होने पर लोग कहने लगते हैं, 'बच के रहना', देख नहीं रहे हो, भाले ही भाले चारों ओर आ रहे हैं' आदि। स्पष्ट है कि यहाँ 'भाला' का आगमन लौहवेष्टित दण्ड के आगमन का बोधक न होकर उनके धारक पुरुषों के भी आने का बोध कराता है। संस्कृत का बहुप्रयुक्त वाक्य 'कुन्ताः प्रविशन्ति' इसी प्रकार के भाव का बोधक है। जिस प्रकार 'कुन्ताः' पद 'कुन्त' से युक्त पुरुष का ज्ञापक है, उसी प्रकार 'सोमेन' भी 'सोमयुक्त याग' का बोधक होगा।

इस प्रकार की लक्षणा को अलङ्कारशास्त्र में 'उपादान लक्षणा' तथा दर्शन के ग्रन्थों में 'अजहत्स्वार्था' कहा जाता है, जिसमें शब्द के मूल अर्थ का परित्याग किये बिना सङ्गति के लिये कुछ अर्थ उसके बाहर से भी आक्षिप्त कर लिया जाता हैं। भास्कर इसको ही 'मत्वर्थलक्षणा' कहते हैं। इसका अर्थ है वह लक्षणा जिसमें युक्तता का अर्थ निहित है। 'मत्' अंश 'मतुप्' या ग्मतुप प्रत्यय का है जिसका प्रयोग 'युक्तता' के अर्थ में होता है।[1] इसमें मूलतः 'मत्' शेष रहता है, अन्य वर्णों का लोप हो जाता है। इसका योग होने पर बुद्धिमत्, युक्तिमत् आदि शब्द बनते हैं। चूडावान्, शिखावान्, मेधावान् आदि रूप मतुप्-प्रत्ययान्त ही हैं, जिनमें 'म' के स्थान पर 'व' आदेश हो गया है।[2] इस शब्द-शक्ति के द्वारा 'सोम' का अर्थ 'सोमवत्' सम्भव है। यद्यपि वैयाकरण 'सोम' पद में मत्वर्थीय अच्[3] प्रत्यय लगाकर 'सोमः' का अर्थ अभिधा से ही 'सोमवत्' ले सकते हैं, तथापि जाति को मुख्यार्थ मानने वाले मीमांसक यहाँ लक्षणा का ही आश्रय लेते हैं।

---

१. तद् अस्यास्ति, अस्मिन्, इति मतुप्॥ पा० ५।२।९४॥ यह तथा अन्य मत्वर्थीय प्रत्यय इन अर्थों में होते हैं—

भूम-निन्दा-प्रशंसासु नित्ययोगेऽतिशायिने।
संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः॥

'सोमेन यजेत' में संसर्ग अर्थ में मत्वर्थलक्षणा अभीष्ट है।

२. यह आदेश 'माद् उपधायाश्च मतोर्वोऽयवाऽऽदिभ्यः। पा० ८।२।९॥ सूत्रसे होता है, जिसका अर्थ है कि यवादि के अतिरिक्त मवर्णान्त, अवर्णान्त तथा म एवं अ वर्णों की उपधा वाले शब्दों के बाद में लगने वाले मतुप् के मकार को वकार आदेश हो।

३. अर्श आदिभ्योऽच् (पा० ५।२।१२७) इस सूत्र से मतु-अर्थ में अच् प्रत्यय हो सकता है।

**वाक्यभेद का अभाव**—विशिष्टविधि 'सोमेन यजेत' से दो बातें प्रकट होती हैं—प्रथम यज्ञ दूसरा सोम नामक द्रव्य। इस प्रकार एक ही वाक्य से दो अर्थ प्रकट होने पर 'वाक्यभेद' नामक दोष की संभावना हो सकती है। किन्तु सिद्धान्तपक्ष यह है कि प्रस्तुत स्थल में वह दोष है नहीं, क्योकि वाक्यभेद में दो वाक्य एक साथ ही दो सर्वथा भिन्न वस्तुओं का विधान करते हैं। ऐसी अवस्था में दोनो वस्तुओं का एक साथ संयोजन संभव न होने से किसी एक का ( विकल्प से ) ग्रहण करना पड़ता है। यथा 'व्रीहिभिर्यजेत यवैर्वा' यह वाक्यभेद का स्पष्ट उदाहरण हैं। इस वाक्य से 'व्रीहिभिर्यजेत' और 'यवैर्यजेत' इस प्रकार से दो द्रव्यों 'व्रीहि' और 'यव' का अलग-अलग विधान होता है। इन दोनों द्रव्यों से एक साथ यज्ञ संभव नहीं हैं, अतः यह यज्ञकर्ता पर निर्भर करता है कि वह चाहे तो 'यव' का होम करे चाहे धान का। कर्त्ता की ऐच्छिकता ही विकल्प है।

वाक्यभेद से विकल्प होता हैं और विकल्प से आठ प्रकार के दोष होते हैं। दोष परिहार के लिए प्रयास होना चाहिये कि उनकी जड़ विकल्प ही न रहे। 'सोमेन यजेत' में वाक्यभेद नहीं है क्योंकि यहाँ याग और द्रव्य, इन दो विषयों का प्रतिपादन अलग-अलग नहीं हो रहा है, जब कि वाक्यभेद में दो स्वतन्त्र वस्तुओं का विधान दो वाक्यों द्वारा होता हैं। प्रस्तुत प्रकरण में याग और सोम द्रव्य दोनों स्वतन्त्र नहीं, अपितु सोम याग के आश्रित है, सोम विशेषण है और याग विशेष्य है। विशेष्य और विशेषण का योग ही विशिष्टत्व है जिसमें दोनों मिलकर एक होते हैं। इस विशिष्ट ऐक्य का संयोजन एक साथ किया जा सकता है। विकल्प का ग्रहण यहाँ अपेक्षित नहीं, विकल्प के अभाव में अष्टविध दोष भी नहीं होगा। वाक्यभेद में दोनों वैकल्पिक पदार्थों का ( उभयस्य ) स्वतन्त्र रूप में पृथक्-पृथक् ( प्रत्येकम् ) विधान होता है, किन्तु 'सोमेन यजेत' में ऐसा न होकर विशिष्ट का विधान है—सोमरूप विशेषण से युक्त यागरूप विशेष्य का विधान है।

**( १३ ) न च 'ज्योतिष्टोमेन स्वर्गकामो यजेते'ति विधि† प्राप्तयागोद्देशेन सोमरूपगुणविधानमेवास्तु, सोमेन यागं भावयेदिति किं मत्वर्थलक्षणयेति वाच्यम्। तस्याधिकारविधित्वेनोत्पत्तिविधित्वासंभवात्।**

**ननु 'उद्भिदा यजेत पशुकाम' इत्यस्येव ज्योतिष्टोमेनेत्यस्याप्युत्पत्त्यधिकारविधित्वमस्त्विति चेत्, न। दृष्टान्ते उत्पत्तिवाक्यान्तराभावेनान्यथानुपपत्त्या तथात्वाश्रयणात्। किञ्च ज्योतिष्टोमेनेत्यस्योभयविधित्वेऽनेनैव यागस्तस्य‡ फलसंबन्धोऽपि बोधनीय इति सुदृढो वाक्यभेदः। तद्वरं सोमपदे मत्वर्थलक्षणया विशिष्टविधानम्।**

'ज्योतिष्टोमेन स्वर्गकामो यजेत' इस विधिवाक्य से प्राप्त याग को लक्ष्य करके सोमरूप गुण का ही विधान मान्य हो, और ( 'सोमेन यजेत का अर्थ ) 'सोम से याग को सम्पन्न करे' लिया जाये, मत्वर्थ लक्षणा से क्या लाभ ?' वह तर्क मान्य नहीं हैं, क्योंकि ( ज्योतिष्टोमेन० आदि ) के अधिकार विधि होने से उसमें उत्पत्ति-विधित्व की संभावना नहीं की जा सकती।

( यदि शङ्का की जाये कि जिस प्रकार 'उद्भिदा यजेत पशुकामः'—पशु की कामना वाला उद्भिद् याग करे—में उत्पत्ति एवं अधिकार विधियाँ एक साथ मानी जाती हैं ) उसी 'उद्भिदा यजेत पशुकामः' की भाँति 'ज्योतिष्टोमेन०' आदि में भी उत्पत्ति एवं अधिकार दोनों विधियाँ मान ली जायें, तो यह भी मान्य नहीं है, क्योंकि प्रस्तुत ( उद्भिदा यजेत पशुकामः )

---

इससे रूप ज्यों का त्यों रह जाने पर भी 'मतुप्' का अर्थ निकल आता है। अर्श आदि आकृतिगण है, अतः 'सोम' पद में कोई असङ्गति भी नहीं आती।

† विधिना–पाठा०।

‡ तत्–पाठा०।

उदाहरण के प्रसङ्ग में दूसरा उत्पत्ति वाक्य न होने से उसके अभाव में अर्थ की संगति न हो पाने के कारण ( उद्भिदा० आदि में ) उसमें वैसे ही भाव ( अर्थात् उत्पत्ति और अधिकार दोनों विधियों ) का अवलम्ब लेना पड़ता है। इसके अतिरिक्त 'ज्योतिष्टोमेन' आदि वाक्य को ( उत्पत्ति एवं अधिकार ) दोनों विधि स्वीकार कर लेने पर इसी से याग ( रूप-साधन ) और उसका फल ( स्वर्गादि ) से सम्बन्ध भी समझना पड़ेगा। ऐसे में घोर वाक्यभेद होगा। अतः सोमपद में मत्वर्थ-लक्षणा से विशिष्ट का विधान ( सोमविशिष्ट याग का विधान ) अधिक उचित है ( न कि 'सोमेन' के गुणविधि आदि का विधान )।

**ननु 'सोमेन यजेते'त्यस्य गुणविधित्वमेवास्तु सोमयागस्वरूपविधिस्तु 'ज्योतिष्टोमेन स्वर्गकामो यजेते'त्ययमेव भवतु। ततश्च ज्योतिष्टोमेनेत्यादिना प्राप्ते कर्मणि गुणविधायकत्वेनापि सोमवाक्यस्योपपत्तौ न मत्वर्थलक्षणा पददोषरूपत्वेनान्याय्या स्वीकर्तव्येत्याशङ्क्‍ते—न च ज्योतिष्टोमेनेत्यादिना। न च वाच्यमित्यत्र हेतुमाह—तस्याधिकारविधित्वेनेति। तर्हि भवतु तस्याधिकारविधित्वमुत्पत्तिविधित्वमपि कुतो न स्यादित्याशङ्क्याह—उत्पत्तिविधित्वासंभवादिति। कर्मस्वरूपमात्रबोधकस्यैव विधेरुत्पत्तिविधित्वं व्यवह्रियते, उत्पत्तिविधिविहितस्य च कर्मणः फलविशेषेण सह संबन्धमात्रमधिकारविधिः करोति। यथा 'आग्नेयोऽष्टाकपालो भवती'त्येतदुत्पत्तिविधिविहितस्य कर्मणः स्वर्गरूपफलविशेषेण संबन्धो 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'त्यनेन विधिना क्रियत इति तस्याधिकारविधित्वमेव नोत्पत्तिविधित्वम्, तद्वदस्याप्यधिकारविधेर्नोत्पत्तिविधित्वं संभवतीति भावः।**

**नुन 'उद्भिदा यजेत पशुकाम' इत्यस्य विधिवाक्यस्य यथोद्भिन्नामककर्मरूपबोधकत्वरूपोत्पत्तिविधित्वेऽपि तस्य कर्मणः पशुरूपफलसंबन्धबोधकत्वरूपाधिकारविधित्वमपि भवति तद्वदस्याप्युभयविधित्वमविरुद्धमित्याशङ्क्‍ते—नन्वित्यादिना। दृष्टान्ते तु कर्मस्वरूपबोधकोत्पत्तिवाक्यान्तराभावेनैकस्य वाक्यस्योभयविधित्वमाश्रितं कर्मणः स्वरूपबोधनमन्तरेण तस्य फलसंबन्धबोधनानुपपत्त्या तस्यैव वाक्यस्योभयविधित्वाश्रयणादिति परिहरति—दृष्टान्त इत्यादिना। ननु 'ज्योतिष्टोमेन स्वर्गकामो यजेते'त्यस्य वाक्यस्योभयविधित्वस्वीकारे 'सोमेन यजेते'त्यस्य मत्वर्थलक्षणामन्तरेणैव गुणमात्रविधायकत्वनिर्वाहे को दोषोऽन्यथा मत्वर्थलक्षणाप्रसङ्गादित्याशङ्क्य परिहरति—किंचेत्यादिना। उभयविधित्व इति। सोमयागस्योत्पत्तिविधित्वंऽधिकारविधित्वं चेत्यर्थः। 'ज्योतिष्टोमेन स्वर्गकामो यजेते'त्यनेनैव सोमयागस्वरूपं तस्य स्वर्गरूपफलसंबन्धश्च बोधनीय इत्यर्थः। सुदृढो वाक्यभेद इति। गौरवलक्षणो वाक्यभेदो दृढतरो भवेदित्यर्थः। तथा चोक्तम्—'श्रौतव्यापारनानात्वे शब्दानामतिगौरवम्। एकोक्त्यसितानां तु नार्थाक्षेपो विरुध्यत' इति। ननु सोमेन यजेतेत्यत्रापि गुणस्य कर्मस्वरूपस्य च विधाने वाक्यभेदस्य सुदृढत्वादिति चेत्। न। विशिष्टविधौ विशेषणविधेरार्थिकत्वेन श्रूयमाणविधिना गुणस्य पृथगविधेयत्वादिति निरस्तत्वात्। न च तस्योत्पत्तिविधित्वे वाक्यभेदस्याभावेऽपि लक्षणादोषस्तु दुर्वार इति वाच्यम्। तस्या वाक्यभेदादल्पदोषत्वात्, लक्षणायाः पददोषत्वाद्वाक्यभेदस्य तु वाक्यदोषत्वात्, पदवाक्यदोषयोर्मध्ये पददोषस्यैव कल्पनीयत्वाद् 'गुणे त्वन्याय्यकल्पनेति' न्यायात्। तस्मात् 'ज्योतिष्टोमेन स्वर्गकामो यजेते'त्यस्योभयविधित्वे वाक्यभेदप्रसङ्गाद्वरं सोमपदे मत्वर्थलक्षणां स्वीकृत्य गुणविशिष्टकर्मस्वरूपविधानमेवेत्याशयेनोपसंहरति—तद्वरमित्यादिना।**

यहाँ मत्वर्थ लक्षणा के ग्रहण को पूर्वपक्षी अनावश्यक सिद्ध करने का प्रयास करते हैं। उनके अनुसार 'सोम' पद में लक्षणा का प्रयोग न केवल अनावश्यक है, अपितु दोषपूर्ण भी हो जाता है। यदि अभिधा से ही काम चल जाये तब लक्षणा के ग्रहण से पददोष होगा। 'सोमेन' आदि को गुणविधि और 'ज्योतिष्टोमेन०' आदि को उत्पत्तिविधि मान लेने से अङ्ग एवं अङ्गी दोनों की प्राप्ति हो जाती है और कोई असङ्गति नहीं रहती। यह कठिन नहीं है क्योंकि जिस प्रकार से 'ज्योतिष्टोमेन स्वर्गकामो यजेत' को उत्पत्तिविधि एवं 'दध्ना जुहोति' को गुणविधि मानने से उद्देश्य की पूर्ति हो गयी थी, वैसे ही यहाँ भी सम्भव है।

किन्तु सिद्धान्ती इसमें व्यावहारिक कठिनाई उपस्थित करते हैं। उनके अनुसार 'ज्योतिष्टोमेन स्वर्गकामो यजेत' अधिकार विधि है। अधिकार विधि के द्वारा याग आदि कर्म से उत्पाद्य स्वर्ग आदि फल के भोक्ता अधिकारी का ज्ञापन होता है। अतः इससे कर्म के स्वरूपमात्र बोधक उत्पत्ति-विधि का कार्य नहीं लिया जा सकता है। यह सर्वमान्य विषय है। यदि 'ज्योतिष्टोमेन' आदि उत्पत्ति विधि होता तो 'सोमेन यजेत' को गुणविधि समझा जा सकता था, किन्तु ऐसा है ही नहीं, अतः कोई प्रश्न नहीं उठता। अधिकार एवं उत्पत्ति दोनों स्वतन्त्र एवं भिन्न विधान करने वाली विधियाँ हैं। अतः एक को दूसरे के स्थान पर नहीं स्वीकार किया जा सकता।

जिस प्रकार अधिकार विधि 'ज्योतिष्टोमेन०' आदि को उत्पत्तिविधि नहीं माना जा सकता, उसी प्रकार उसमें उक्त दोनों विधियाँ एक साथ भी नहीं स्वीकार की जा सकती। ऐसा करने पर एक ही वाक्य से कर्म एवं अधिकारी दोनों से सम्बद्ध अलग-अलग अर्थ निकलने लगेंगे और भयङ्कर वाक्यभेद उपस्थित हो जायेगा। व्यक्त है कि वाक्यभेद एक दोष है, जिसका यथासंभव परिहार अपेक्षित है। अतः समस्त असंगतियों का निवारण 'सोमेन यजेत' के सोमपद में लक्षणा स्वीकार करने से हो जाता है, अतः उसी का ग्रहण श्रेष्ठ है।

यद्यपि 'उद्भिदा यजेत पशुकामः' से उत्पत्ति एवं अधिकार दोनों विधियों का काम लिया जाता है, किन्तु वहाँ की तथा 'ज्योतिष्टोमेन०' आदि की परिस्थितियों में अन्तर है। 'उद्भिदा०' आदि में उत्पत्ति का बोधक अलग वाक्य है ही नहीं, अतः अगत्या वहाँ दोनों का काम एक से ही लेना पड़ता है, किन्तु 'ज्योतिष्टोमेन' आदि अधिकारविधि के ही रूप में सर्वस्वीकृत है, अतः उसको उसके अधिकार-क्षेत्र से बाहर ले जाना दोष पूर्ण होगा।

आपदेव ने 'मीमांसान्यायप्रकाश' में वाक्यभेद को वाक्यदोष तथा मत्वर्थलक्षणा को पद दोष माना है। उनकी दृष्टि में वाक्यदोष की तुलना में पददोष क्षम्य है।[1] अतः दो दोषों की उपस्थिति होने पर हल्का पड़ने वाला ही ग्राह्य होता है। स्वल्पदोषत्व के कारण पददोषयुक्त मत्वर्थलक्षणा करके 'सोमवता यागेन' अर्थ स्वीकार करना अपेक्षाकृत अच्छा है। 'तद्वरं०' आदि शब्दों का यही अभिप्राय है। इस प्रकार विधि के अज्ञात-ज्ञापकत्व स्वरूप को सिद्ध करते हुये स्पष्ट किया गया कि कहीं प्रमाणान्तर से अज्ञात मुख्य कर्म का ज्ञान विधि से होता है, जैसे 'अग्निहोत्रं जुहुयात स्वर्ग-कामः' में, इसे ही प्रधान कर्म का ज्ञापक होने से प्रधान विधि अथवा कर्मस्वरूपमात्र का बोधक होने से उत्पत्तिविधि कहा जाता है। जहाँ प्रधान कर्म का ज्ञान रहने पर केवल गुण, अङ्ग अथवा अप्रधान का अज्ञात पक्ष ज्ञात होता है, वहाँ गुणविधि मानी जाती है, जैसे दध्ना जुहोति में। इनके विपरीत जहाँ प्रमाणान्तर से अज्ञात प्रधान कर्म के साथ गुण का भी विशेष्य-विशेषणभाव से ग्रहण होता है वहाँ विशिष्ट विधि होती है, जैसे 'सोमेन यजेत' में। यहाँ ध्यान रखना है कि

---

१. न च 'सोमेन यजेत' इत्यस्य उत्पत्तिविधित्वे यद्यपि न वाक्यभेदः, तथापि मत्वर्थलक्षणा-स्यादेव इति वाच्यम्। तस्याः स्वीक्रियमाणत्वात्। लक्षणातो वाक्यभेदस्य जघन्यत्वात्' लक्षणा हि पददोषः वाक्यभेदस्तु वाक्यदोषः। पदवाक्ययोर्मध्ये पदे एव दोषकल्पनाया उचितत्वात्। मीमांसा-न्यायप्रकाश पृ० ८५।

यह विधि के प्रकारों का निरूपण नहीं है, उसके भेद तो आगे बतलाये जायेगें। यहाँ केवल इतना अभिमत है कि विधित्व अज्ञात के ज्ञापन में ही है चाहे प्रधान कर्म का ज्ञापन हो चाहे गौण कर्म या द्रव्य का अथवा दोनों का।

## विधिश्चतुर्विधः

**(१४) विधिश्चतुर्विधः—उत्पत्तिविधिः, विनियोगविधिः, अधिकारिविधिः, प्रयोगविधिश्चेति।**

विधि चार प्रकार का है-(१) उत्पत्तिविधि, (२) विनियोगविधि, (३) अधिकारविधि (४) प्रयोगविधि।

**विधिं विभजते—विधिश्चतुर्विध इति।**

विधि का यह चतुर्विधविभाजन यज्ञ के सम्पादन में सहायता के आधार पर है। अज्ञात के ज्ञापन का भाव सर्वत्र निहित है, अन्यथा उनमें विधित्व होगा ही नहीं। उत्पत्तिविधि के द्वारा अज्ञात प्रधान कर्म का ही ज्ञापन होता है, यथा 'अग्निहोत्रं जुहोति' से अग्निहोत्र नाम का मुख्य याग इस वाक्य से ही ज्ञात होता है। इसे उत्पत्तिविधि कहने का अभिप्राय संभवतः यही है कि इससे मुख्य क्रिया जो अन्य छोटे-छोटे कर्मों का भी आधार हैं इदंप्रथमतया ज्ञात होती है। मुख्यकर्म का ज्ञान उत्पन्न होने पर ही अङ्गक्रियाओं के ज्ञान की बात आती है। समस्तकर्मों के प्रभव,-उत्पत्तिस्थानस्वरूप-प्रधान क्रिया का सर्वप्रथम ज्ञापक होने से इस विधि का उत्पत्तिविधि नाम चरितार्थ होता हैं।[1] विनियोगविधि से यह ज्ञात होता है कि कौन से प्रधान कर्म में कौन-कौन गौण कर्म लगते हैं। अतः लगने वाले गौण कर्मों के नियोग का ज्ञापक होने से इस प्रकार को विनियोग-विधि कहते हैं। उदाहरण के लिए 'दध्ना जुहोति' सदृश वाक्य द्रष्टव्य हैं। अधिकारविधि का नाम कर्मविशेष के अधिकारी के गुणों का ख्यापन करने से अन्वर्थ होता है, जैसे 'यजेत स्वर्गकामः' से यह ज्ञात होता है कि याग करने का अधिकार उसे ही है जो स्वर्ग का इच्छुक हो, स्वर्ग के लिए वितृष्ण व्यक्ति को याग करने की आवश्यकता नहीं। प्रयोगविधि से ज्ञात होता है कि कर्म सम्पादन के समय किसको पहले किया जाये और किसे बाद में, जैसे 'वेदं कृत्वा वेदिं करोति' में।

## उत्पत्तिविधिः

**(१५) तत्र कर्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिः, यथा 'अग्निहोत्रं जुहोती'ति। अत्र च विधौ कर्मणः करणत्वेनान्वयः, अग्निहोत्रहोमेनेष्टं भावयेदिति।**

**ननु यागस्य द्वे रूपे द्रव्यं देवता च। तथा च रूपाश्रवणेऽग्निहोत्रं जुहोतीति कथमुत्पत्तिविधिः? अग्निहोत्रशब्दस्य तु तत्प्रख्यन्यायेन नामधेयत्वादिति चेत्। न। रूपाश्रवणेऽप्यस्योत्पत्तिविधित्वात्। अन्यथा रूपश्रवणात् 'दध्ना जुहोती'-त्ययमेवोत्पत्तिविधिः स्यात्। तथा च 'अग्निहोत्रं जुहोती'ति वाक्यमनर्थकं स्यात्।**

उन (चारों प्रकार की विधियों) में (याग आदि) कर्म के केवल स्वरूप के बोधक विधि को उत्पत्तिविधि कहते हैं, जैसे 'अग्निहोत्रं जुहोति' में। इस (अग्निहोत्रं आदि उत्पत्ति) विधि में (अग्निहोत्र) कर्म का करण के रूप में अन्वय होता है, (अतः उक्त वाक्य का अर्थ होगा) अग्निहोत्र नामक होम से इष्ट की भावना करनी चाहिये।

---

१. उत्पत्तिः कर्मणः प्रवृत्तिविषयताप्रयोजकप्राथमिकप्रतीतिः। प्रतिपादिका पृ० ३३।

(यदि शङ्का हो कि) याग के तो दो अङ्ग होते हैं १. द्रव्य तथा २. देवता। (इस वाक्य में) उस प्रकार के अङ्गों का श्रवण न होने से 'अग्निहोत्रं जुहोति' में उत्पत्तिविधि कैसे होगी? (वस्तुतः) अग्निहोत्र शब्द तत्प्रख्यन्याय से नामधेय नामक (वेदाङ्ग) होगा (विधि नहीं।) (तो कहना चाहिये कि) नहीं (अर्थात् तत्प्रख्यन्याय से अग्निहोत्र नामधेय नहीं होगा, अपितु विधि ही कहा जायेगा।) क्योंकि (उक्त) रूपों का श्रवण न होने पर भी इसमें उत्पत्तिविधि है। नहीं तो (अर्थात् रूप का श्रवण होने पर ही विधि मानने पर तो) रूप का श्रवण होने से 'दध्ना जुहोति' यह वाक्य भी उत्पत्तिविधि होने लगेगा। वैसा होने पर तो 'अग्निहोत्रं जुहोति' यह वाक्य व्यर्थ हो जायेगा।

तत्रोत्पत्तिविधिं लक्षयति—तत्रेत्यादिना। तत्र चतुर्णां विधीनां मध्य इत्यर्थः। कर्मस्वरूपमात्रेत्यत्र मात्रपदेनोत्पत्तिविधेः कर्मणः फलादिना सह संबन्धबोधकत्वं वारयति—'उद्भिदा यजेत पशुकाम' इति विधेस्तु श्रौतमधिकारविधित्वमेव, उत्पत्तिविधित्वं तु कर्मस्वरूपबोधकविध्यन्तराभावेनार्थिकमेवेति न दोषः। तत्रोदाहरणमाह—यथाग्निहोत्रं जुहोतीति। एतदुपलक्षणं 'सोमेन यजेत', 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनं', 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवती'-त्यादीनाम्। तथा च तत्र द्वितीयाध्याये कर्मोत्पत्तिविधीनामेव भेदो निरूपितः। अत्राप्युत्पत्तिविधिलक्षणप्रदर्शनेनैव तेषां भेदोऽपि ध्वनित एव शब्दान्तरादिभिर्हेतुभिः, अस्माभिस्तु पूर्वमेव तेषां भेदः संक्षेपेण निरूपित इत्युपरम्यते। ननु चात्रोत्पत्तिविधौ कर्मणः साध्यत्वेनान्वयो भवतु 'अग्निहोत्रं होमं कुर्यादिति, व्रीहीन्प्रोक्षतीतिवदग्निहोत्रं जुहोती'त्यत्रापि द्वितीयायाः साध्यत्ववाचकत्वात्। तथा च साध्यस्य साध्यत्वस्वभावादेव साध्यान्तरसाधनत्वासंभवेन साध्यन्तरान्वयायोगादधिकारविध्यवगतफलसंबन्धानुपपत्तिः स्यादित्याशङ्क्याह—अत्र च विधावित्यादिना। अग्निहोत्रहोमेनेष्टं भावयेदिति करणत्वेनान्वये तु किं तदिष्टमिति वीक्षायाम् 'अग्निहोत्रं जुहुयात्स्वर्गकाम' इत्यधिकारविध्यवगतफलसंबन्धापत्तेः, स्वसाधननिष्पादितस्य सिद्धस्वभावस्यैव करणत्वेनान्वयाच्च न कोऽपि दोष इति भावः। ननूत्पत्तिविधाविष्टबोधकपदस्याभावादग्निहोत्रहोमेनेष्टं भावयेदिति कथं वाक्यार्थः स्यादिति चेत् न। विधेरेवेष्टाक्षेपकत्वात्। अन्यथा तस्यापुरुषार्थभूते कर्मणि पुरुषप्रवर्तकत्वानुपपत्तिः स्यात्।

ननु गुरुमते विधिः स्वसिद्ध्यर्थमेव नित्यादिषु कर्मसु पुरुषं प्रवर्तयति। तथा च काम्यकर्मोत्पत्तिविधीनामिष्टान्तराक्षेपकत्वेऽपि न नित्यादिकर्मोत्पत्तिविधीनामिष्टान्तराक्षेपकत्वं संभवति। न च लिङादिशब्दव्यापारस्य विधेर्नित्यत्वेन कथं तस्य स्वसिद्ध्याक्षेपकत्वमिति वाच्यम्। गुरुमतापरिज्ञानात्। तथा हि—विधिशब्दस्तावल्लिङादिशब्दवचनस्तदर्थवचनश्च भवति। तत्र भट्टमते तदर्थस्तु शब्दव्यापारविशेषो भावनैव। गुरुमते तु नियोगाख्यमपूर्वमेव लिङादिशब्दार्थभूतो विधिः। तस्य च साध्यस्वभावत्वेन स्वसिद्ध्याक्षेपकत्वमुपपद्यते। यथा च लोके लिङः कार्यव्युत्पत्त्यनुरोधेनाग्निहोत्रं जुहुयादित्यादावपि लिङा नियोग एव प्रतीयते। नियोगश्चाधिकारिविषयादिसापेक्ष एव। तत्र कस्य नियोग इत्यधिकार्याकाङ्क्षायां जीवनादिमत इति जीवनादिविशिष्टोऽधिकारित्वेन संबध्यते। कुत्र नियोग इति विषयाकाङ्क्षायां तु होमादाविति होमादिर्विषयत्वेन संबध्यते होमादिविषयश्च नियोगः कृतिसा-

ध्यतयैव प्रतीयते। तस्य च साक्षात्कृतिसाध्यत्वासंभवेन स्वस्य कृतिसाध्यत्वनिर्वाहार्थं विषयतया संबद्धस्य होमादेः करणत्वमप्याक्षिपति। तदुक्तं शालिकायां—'कृतितत्साध्य-मध्यस्थो यागादिर्विषयो मतः। कार्येऽसङ्कुटिताकारे करणत्वेन संमतः' इति। तस्मात् काम्यकर्मोत्पत्तिविधेः 'विश्वजिता यजेते'त्यादिविधेश्च स्वप्रवर्तकत्वान्यथानुपपत्त्या सामान्यतः प्रयोजनविशेषाक्षेपकत्वेऽपि नित्यकर्मोत्पत्तिविधेः स्वसिद्धेरेव प्रयोजनत्वान्न प्रयोजनान्तरा-क्षेपकत्वमिति चेत्, न। नियोगाख्यविधेः स्वरूपेणाप्रयोजनत्वेन स्वसिद्धये पुरुषप्रवर्त-कत्वानुपपत्तेः। अन्यथा 'विश्वजिता यजेते'त्यादावपि विधेः स्वसिद्ध्यर्थमेव पुरुषप्रवर्त-कत्वापत्तेः, तच्चानिष्टम्, 'स स्वर्गः स्यात्सर्वान्प्रत्यविशेषात्' इति न्यायविरोधात्। तस्मा-न्नित्यादिष्वपि कर्मसु स्वर्गः, 'धर्मेण पापमपनुदती'त्यादिशास्त्रानुरोधेन पापक्षयादिकं वा प्रयोजनं स्वीकर्तव्यमित्यलमतिप्रसङ्गेन। प्रकृतमनुसरामः। तस्मात् साधूक्तमुत्पत्तिविधौ कर्मणः करणत्वेनान्वय इति।

ननु 'अग्निहोत्रं जुहोती'त्यस्य नोत्पत्तिविधित्वं द्रव्यदेवतात्मकस्य कर्मरूपस्यात्रा-श्रवणादित्याशङ्कते—नन्विति। ननु 'अग्नये हात्रमत्रे'त्यग्निहोत्रशब्देनाग्निदेवतात्मकस्य कर्मरूपस्य श्रवणात्कथं रूपाश्रवणमित्याशङ्क्याह—अग्निहोत्रशब्दस्येति। अग्निहोत्रशब्दस्य 'तत्प्रख्यं चान्यशास्त्र'मिति तत्प्रख्यन्यायेन नामधेयत्वस्य वक्ष्यमाणत्वान्न कस्यापि कर्मरू-पस्य श्रवणमत्रेत्यर्थः। यद्यप्यत्र कर्मणो रूपं न श्रूयते तथापि विध्यन्यथानुपपत्त्या तत्कल्प्यते, तच्च सामान्यतः कल्प्यमानं द्रव्यदेवतात्मकं कर्मणो रूपं विशेषाकाङ्क्षया गुणविधिमन्त्र-वर्णाभ्यां विशेषेण चावगम्यमानमत्र संभवति। ततश्चाग्निहोत्रं जुहोतीत्यत्र द्रव्यदेवतात्म-कस्य कर्मरूपस्य श्रवणाभावेऽप्यस्य होमरूपकर्मस्वरूपमात्रबोधकत्वरूपमुत्पत्तिविधित्वं संभ-वतीत्याशयेन परिहरति—नेति। तत्र निरुक्ताशयं हेतुमाह—रूपाश्रवण इति। विपक्षे बाधकमाह—अन्यथेति। अग्निहोत्रं जुहोतीत्यस्य रूपाश्रवणमात्रेणोत्पत्तिविधित्वानङ्गीकारे 'दध्ना जुहोती'त्यस्यैवोत्पत्तिविधित्वं स्यात्, अत्र कर्मस्वरूपस्य श्रवणादित्यर्थः 'दध्ना जुहोती'त्यस्याग्निहोत्रकर्मोत्पत्तिविधित्वे वाक्यान्तरस्यानर्थकत्वमनिष्टमापादयति—तथा चेति। न चाग्निरूपगुणविधित्वेनाप्यस्योपपत्तिरिति वाच्यम्। 'अग्निर्ज्योति'रित्यादि-मन्त्रवर्णनाग्निरूपगुणस्य प्राप्तत्वात्, कर्मनामधेयत्वस्य वक्ष्यमाणत्वाच्च। तस्मादनर्थकमिति साधूक्तम्। किंच 'दध्ना जुहोती'त्यस्योत्पत्तिविधित्वे 'पयसा जुहोती'त्यस्यापि वैयर्थ्यं कर्मान्तरविधायकत्वं वा स्यात्, होमस्योत्पत्तिशिष्टदध्यवरुद्धत्वेन तत्र पयोरूपगुणविधित्वा-संभवात्। तथा चानेकादृष्टकल्पनापत्तिः। 'अग्निहोत्रं जुहोती'त्यस्य होमोत्पत्तिविधित्वे तु 'दध्ना जुहोति, पयसा जुहोती'त्यादिवाक्यस्य सर्वस्यापि तत्र खले कपोतन्यायेन युगप-द्दध्यादिगुणविधायकत्वेनाप्युपपत्त्या नानेकादृष्टकल्पनाप्रसङ्ग इत्यग्निहोत्रं जुहोतीत्यस्यै-वोत्पत्तिविधित्वं न्याय्यमित्यलमतिविस्तरेण।

उत्पत्तिविधि के लक्षण में 'मात्र' पद महत्त्वपूर्ण है। इस पद के प्रयोग से स्पष्ट हो जाता है कि उत्पत्तिविधि का कार्य कर्म के स्वरूपमात्र का बोध कराना है न कि विनियोगविधि की भाँति 'गुण' का, अथवा अधिकार विधि की भाँति 'फल' का या प्रयोगविधि की भाँति 'क्रम' का। 'अग्निहोत्रं जुहोति' से केवल यही पता चलता है कि 'अग्निहोत्र' नामक याग का विधान करना है यद्यपि 'दध्ना जुहोति' से भी कर्म के स्वरूप का ज्ञान होता है क्योंकि 'जुहोति' शब्द के प्रयोग से याग के

स्वरूप का ज्ञान होता है, तथापि कर्मस्वरूप के साथ ही 'दध्नापद से गुण के भी स्वरूप का बोधन होने से इस वाक्य को कर्मस्वरूप**मात्र** का बोधक नहीं कहा जा सकता। यहाँ 'मात्र'पद के प्रयोग से कर्म के फल आदि के साथ सन्बन्ध का निवारण होता है।

कुछ स्थल ऐसे भी हैं जहाँ एक ही वाक्य से फल अथवा स्वामित्व तथा कर्मस्वरूप दोनों की बोधक अधिकार एवं उत्पत्ति दोनों विधियाँ माननी पड़ती हैं। जैसे 'उद्भिदा यजेत पशुकामः' में 'पशुकाम' पद से पशु फल का सम्बन्ध भी ज्ञात होने से अधिकारविधित्व है, साथ ही 'यजेत' से कर्मस्वरूपमात्र का भी ज्ञान होता है, अतः उत्पत्तिविधित्व भी है। इसलिये यह वाक्य कर्मस्वरूप**मात्र** का बोधक न होने से उत्पत्तिविधि नहीं कहा जा सकता। किन्तु इससे सम्बद्ध कर्मस्वरूपमात्र के तथा फलसम्बन्ध के ज्ञापक स्वतन्त्र वाक्यों का अभाव होने से अगत्या इससे ही दोनों काम लेना पड़ता हैं, पहले इसे अधिकारविधि और बाद में गौणरूप से उत्पत्तिविधि भी मान लिया जाता है। रामेश्वर शिवयोगी के शब्दों में 'उद्भिदा यजेत पशुकामः' इति विधेस्तु **श्रौत**मधिकारविधित्वमेव। उत्पत्तिविधित्वं तु कर्मस्वरूपबोधकविध्यन्तराभावेन **आर्थिक**मेव इति न दोषः।' इस प्रकार की कठिनाइयों को ध्यान में रखकर ही 'प्रतिपादिका' नाम की टीका के रचयिता कृष्णनाथभट्टाचार्य कर्म के नाममात्र का निर्देश ही नहीं, अपितु द्रव्य और देवता से विशिष्ट कर्म का भी निर्देश होने पर उत्पत्तिविधित्व स्वीकार करते हैं—'सा च कर्मणो नाममात्रनिर्देशेन द्रव्यदेवताविशिष्टकर्मनिर्देशेन च सम्भवति। अतः कश्चित् कर्ममात्रोत्पादकः कश्चिच्च विधिर्द्रव्यदेवताविशिष्टकर्मोत्पादकः। तयोरुभयोरपि कर्मस्वरूपमात्रज्ञापकत्वम्। नाममात्रनिर्देशेन द्रव्यदेवताविशिष्टकर्मनिर्देशेन च कर्मणः स्वरूपज्ञानसम्भवात्। अतो मात्रपदं कर्मणः फलसम्बन्धव्यावर्तकम्।'[1]

**कर्म की करणता**—उत्पत्तिविधि की एक विशेषता यह है कि इसमें आये कर्म का करण के रूप में अर्थ लिया जाता हैं। 'अग्निहोत्रं जुहोति' में अग्निहोत्र पद द्वितीया विभक्ति में हैं और 'जुहोति' का कर्म है। सामान्यतः देखा जाता है कि कर्म कर्त्ता का अभीष्टतम होता है।[2] जो अभीष्टतम होता है वही साध्य, फल, या लक्ष्य कहा जाता है। व्याकरण की दृष्टि से 'अग्निहोत्र' को ही साध्य होना चाहिये।

किन्तु मीमांसकों को 'अग्निहोत्र' साधन के रूप में मान्य है, साध्य के रूप में नहीं। इसी को उन्होंने अपने अनुसार स्पष्ट किया है—अग्निहोत्रहोमेन इष्टं भावयेत्। द्रष्टव्य है कि यहाँ अग्निहोत्र तृतीया विभक्ति में होने से करण के रूप में मान्य है। अग्निहोत्र किसका साधन है, इसके उत्तर के लिए 'इष्टम्' पद का प्रयोग है। इष्ट ही साध्य है। इष्ट क्या हैं इसका उल्लेख इस वाक्य में नहीं हैं। वस्तुतः उत्पत्तिविधि का शुद्ध उदाहरण होने से इष्ट का कथन यहाँ हो भी नहीं सकता। इष्ट, साध्य अथवा फल तथा उससे सम्बन्ध का ज्ञान तो अधिकारविधि से संभव है। वहीं से साध्य या इष्ट की प्राप्ति हो सकती है। यथा 'अग्निहोत्रं जुहुयात् स्वर्गकामः' वाक्य अधिकारविधि का उदाहरण है, वहीं से इष्ट 'स्वर्ग का ग्रहण होता हैं।[3]

वस्तुतः यागादिकर्म इष्ट हो भी नहीं सकता। ग्रन्थ के प्रारम्भिक अंश में याग आदि को धर्म कहा गया है। धर्म स्वयं प्रयोजन नहीं होता है, वह तो प्रयोजनवान् है। पहले 'प्रयोजनवत्' पद की व्याख्या में स्पष्ट किया जा चुका है कि याग आदि साधन हैं और स्वर्ग आदि प्रयोजन या साध्य।

---

१. प्रतिपादिका पृ० ३३।

२. कर्तुरीप्सिततमं कर्म (पा० १।४।४९)।

३. अग्निहोत्रहोमेन इष्टं भावयेत् इति करणत्वेनान्वये तु किं तदिष्टमिति वीक्षायाम् 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यधिकारविध्यवगतफलसम्बन्धोपपत्तेः। कौमुदी० और भी द्रष्टव्य–मीमांसान्यायप्रकाशः पृ० १२१।

इसके अतिरिक्त कष्टपूर्ण होने से भी याग को इष्ट नहीं माना जा सकता, उसकी तुलना में सुखस्वरूप स्वर्ग ही अभीष्टतर है।[1]

यहाँ एक प्रश्न और उठता है कि 'अग्निहोत्र' को करण के रूप में स्वीकार कर लिया गया किन्तु 'इष्टं' पद कहाँ से आ गया? इसके उत्तर में कृष्णनाथ भट्टाचार्य ने मत व्यक्त किया है कि 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इस अधिकारविधि में तो स्वर्गरूप फलविशेष का उल्लेख है, किन्तु इस वाक्य 'अग्निहोत्रं जुहोति' में नहीं। यहाँ फलविशेष का निर्देश न होने से फलसामान्य का उल्लेख 'इष्ट' पद से किया गया है।[2] आपदेव के अनुसार यह नहीं कहना चाहिये कि 'इष्ट' पद का अभाव होने से उत्पत्तिविधि में 'कर्मणा इष्टं भावयेत्' यह वाक्यार्थ कैसे निकलेगा, क्योंकि 'विधि' का श्रवण होते ही उससे इष्ट की बोधकता का ज्ञान हो जाता है। विधिश्रुति पुरुष को पुरुषार्थ में प्रवृत्त कराती हुई कर्मफल से सम्बन्धमात्र बतलाती है।[3]

**याग के दो रूप**—याग के दोनों रूपों में से द्रव्य वह पदार्थ है जो दिया जाता है और देवता वह है जिसके लिए दिया जाता है। याग में इनका ज्ञान आवश्यक होता है। 'अग्निहोत्रं जुहोति' में इन दोनों में से किसी का ज्ञान नहीं होता, अतः इस वाक्य के उत्पत्तिविधि होने में शङ्का होती है।

इसका प्रथम उत्तर तो यही है कि यह आवश्यक नहीं कि उत्पत्तिविधि में दोनों रूपों में से एक-एक या दोनों का शब्दतः कथन हो ही। वहाँ लक्षणा आदि से भी इनका ज्ञान हो सकता है। 'रूपाश्रवणेऽपि' आदि शब्दों से यह भाव व्यक्त होता है। उत्पत्तिविधि में कर्म का सामान्य स्वरूप 'जुहोति', 'यजेत' आदि से ही प्राप्त हो जाता है और उसके विशेष रूप की कल्पना की जाती है। 'स्वरूप' सामान्य होता है और रूप विशेष।

यदि द्रव्य अथवा देवता के वाचक शब्दों से युक्त वाक्य को ही उत्पत्तिविधि माना गया तो 'दध्ना जुहोति' जैसी गुणविधियाँ भी दधिनामक द्रव्य का श्रवण होने से उत्पत्तिविधि हो जायेगी, किन्तु यह अभीष्ट नहीं है। इसके अतिरिक्त दूसरा दोष यह होगा कि 'दध्ना जुहोति' को उत्पत्तिविधि मानने पर वास्तविक उत्पत्तिविधि का बोधक वाक्य 'अग्निहोत्रं जुहोति' व्यर्थ हो जायेगा, क्योंकि इसका कार्य दूसरे मन्त्र से ही सम्पन्न हो जायेगा और इसका फिर कोई प्रयोजन नहीं रह जायेगा। मीमांसक वेद के किसी भी वाक्य या वाक्यांश को निरर्थक मानने के लिए तैयार नहीं। अतः यह मानना उचित नहीं कि उत्पत्तिविधि में द्रव्य या देवता या दोनों का शब्दशः कथन हो ही। इस प्रसंग में यह नहीं कहना चाहिये कि तत्प्रख्यन्याय ( तत् = देवता का प्रख्य = कथन, न्याय = सिद्धान्त ) से 'अग्निहोत्रं जुहोति' में अग्निहोत्र का अर्थ देवपरक किया जा सकता है। तत्प्रख्य-न्याय से 'अग्नौ अग्नये वा होत्रम्' व्युत्पत्ति करके अग्निदेवता का अर्थ निकाला जा सकता है, किन्तु ग्रन्थकार का कथन है तत् अर्थात् देवता का प्रख्य अर्थात् ज्ञापक एक दूसरा ही मन्त्र है जिससे द्रव्य देवता का ज्ञान होता है, न कि इसी मन्त्र में अग्निहोत्रं की व्युत्पत्ति करके उनका ग्रहण अपेक्षित है। यह भाव मीमांसासूत्र के एक सूत्र 'तत्प्रख्यं चान्यशास्त्रम्' ( १।४।४ ) में भी समाहित

१. For, the sacrifice is a troublesome affair and nobody would desire it for its ownsake. It is only desired as an instrument to heaven, which, being full of bliss, is the proper साध्य. The Arthasamgraha p.106.

२. 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यधिकारविधिना स्वर्गरूपफलविशेषस्य श्रुतत्वेऽपि एतद्वाक्ये तदश्रवणादिष्टमिति सामान्यत उक्तम्। प्रतिपादिका पृ० ३३।

३. न च उत्पत्तिविधौ इष्टवाचकपदाभावेन 'कर्मणा इष्टं भावयेत्' इति कथं वाक्यार्थ इति वाच्यम्। विधिश्रुतेरेव इष्टबोधकत्वात्। सा हि पुरुषार्थे पुरुषं प्रवर्तयन्ती कर्मणः फलसम्बन्धमात्रं बोधयति। तस्माद् युक्तमुत्पत्तिविधौ कर्म करणत्वेन अन्वेति इति। मीमांसान्यायप्रकाशः पृ० १२१।

है। वह भिन्न मन्त्र जिससे अग्निहोत्र होम के दोनों देवताओं—अग्नि एवं सूर्य—का ज्ञान होता है, दूसरे हैं। वे हैं—'अग्निर्ज्योतिः ज्योतिरग्निः स्वाहेति सायं जुहोति' सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातः'। 'अग्निहोत्रं जुहोति' वाक्य से भिन्न प्रस्तुत मन्त्र के द्वारा ही अग्नि एवं सूर्य का बोध होता है। यही सर्वमान्य सिद्धान्त है।

## विनियोगविधिः

**( १६ ) अङ्गप्रधानसंबन्धबोधको विधिर्विनियोगविधिः। यथा 'दध्ना जुहोती'ति। स हि तृतीयया प्रतिपन्नाङ्गभावस्य दध्नो होमसंबन्धं विधत्ते दध्ना होमं भावयेदिति।**

**गुणविधौ च धात्वर्थस्य साध्यत्वेनान्वयः, क्वचिदाश्रयत्वेनापि यथा 'दध्नेन्द्रियकामस्य जुहुया'दिति। अत्र दधिकरणत्वेनेन्द्रियं भावयेत्। तच्च किन्निष्ठमित्याकाङ्क्षायां संनिधिप्राप्तहोम आश्रयत्वेनान्वेति।**

( द्रव्य, देवता आदि ) अङ्ग तथा प्रधान ( होम आदि ) के सम्बन्ध के ज्ञापक विधि को विनियोगविधि कहते हैं। जैसे 'दध्ना जुहोति'—दधि से होम करे—यह वाक्य तृतीया विभक्ति से सूचित किये जा रहे अङ्गभाव वाले 'दधि' का होम से सम्बन्ध का विधान कर रहा है। ( अतः वाक्य का अर्थ होगा ) दधि से होम की भावना करे।

गुणविधि में धातु के अर्थ का साध्य के रूप में अन्वय होता है। कहीं, कहीं ( धातु के अर्थ का ) आश्रय के भी रूप में ( ग्रहण होता है। ) जैसे—'दध्ना इन्द्रियकामस्य जुहुयात्' सदृश वाक्य में, जहाँ अर्थ होगा दधिरूप करण से इन्द्रिय की भावना करे। वह ( तृतीया से उपस्थित दधिकरणता ) किसमें स्थित है, यह आकांक्षा होने पर समीप में विद्यमान होम ( रूप धात्वर्थ ) आश्रय के रूप में अन्वित होता है।

**तृतीयाध्यायस्यार्थभूतं शेषशेषिभावं निरूपयितुमिदानीं विनियोगविधिं लक्षयति—अङ्गप्रधानेति। अङ्गानां द्रव्यदेवतादिलक्षणानां प्रधानैर्वाक्यान्तरविहितैः सह संबन्धस्य शेषत्वलक्षणस्य बोधको विधिरित्यर्थः। तत्रोदाहरणमाह—यथा दध्नेति। 'दध्ना जुहोती'ति, 'पयसा जुहोती'त्यादेरुपलक्षणार्थम्। स हि विधिस्तृतीयया प्रतिपन्नाङ्गभावस्य दध्यादेरग्निहोत्रं जुहोतीति विहितहोमसंबन्धं विधत्त इत्याह—स हीत्यादिना। ननु 'दध्ना होमं भावयेत्, होमेनेष्टं भावयेदि'ति साध्यत्वेन करणत्वेन च होमस्यान्वयः स्यात्। तथा च विरुद्धत्रिकद्वयप्रसङ्गः। तथा हि—दध्ना जुहोतीत्यत्र सकृदुच्चरितस्य जुहोतीत्याख्यातस्य दधिरूपगुणे किंचिदिष्टे च तन्त्रेण संबन्धाङ्गीकारे सत्युपादेयत्वं, विधेयत्वं, गुणत्वं, चेत्येकं त्रिकम्; उद्देश्यत्वं, अनुवाद्यत्वं, प्राधान्यं, चेत्यपरं त्रिकं होमे संपद्यते, कथम्? शृणु—फलमुद्दिश्य होम उपादीयते, फलमनूद्य होमो विधीयते, फलं प्रधानं होम उपसर्जनम्। एवं होममुद्दिश्य दध्युपादीयते, होममनूद्य दधि विधीयते, होमः प्रधानं दध्युपसर्जनम्। ततश्च होमे फलापेक्षयोपादेयत्वं विधेयत्वं गुणत्वं, दधिरूपगुणापेक्षया चोद्देश्यत्वमनुवाद्यत्वं प्राधान्यं च संपद्यते। न चात्र न तन्त्रेण संबन्धः किंतु पृथग्घोमावृत्त्या संबन्धो भवतीति वाच्यम्। वाक्यभेदप्रसङ्गात्, 'दध्ना होमं भावयेत्, होमेन चेष्टं भावये'दिति वाक्यद्वयप्राप्तेः। तस्मान्न दधिशब्दो गुणपर इति चेत्, न। भ्रान्तिमत्त्वात्, तथा हि—यत्र हि साध्यत्वेन करणत्वेन चैकस्य युगपत्तन्त्रेण संबन्ध आशङ्क्यते तत्रैव विरुद्धत्रिकद्वयस्य**

प्रसक्तिर्भवति—यथा 'वाजपेयेन स्वाराज्यकामो यजेते'त्यत्र। तत्र च वाजपेयशब्दस्य पेयसुराद्रव्यवाचित्वेन गुणविध्याशङ्कायां मत्वर्थलक्षणाप्रसङ्गात्तेपे तन्त्रेण युगपत्स्वाराज्यफलवाजपेयगुणसंबन्धो यागस्य पूर्वपक्षितः। तत्र विरुद्धत्रिकद्वयप्रसङ्गापादनेन यथोक्तद्रव्यनिमित्तं वाजपेयशब्दस्य नामधेयत्वं राद्धान्तितम्। विरुद्धत्रिकद्वयप्रसङ्गश्च फलमुद्दिश्य याग उपादीयते फलमनूद्य यागो विधीयते। फलं प्रधानं याग उपसर्जनम्। एवं यागमुद्दिश्य वाजपेय उपादीयते, यागमनूद्य वाजपेयो विधीयते। यागः प्रधानं वाजपेय उपसर्जनम्। फलस्योद्देश्यत्वं च मानसापेक्षो विषयत्वाकारः। यागस्योपादेयत्वं त्वनुष्ठीयमानत्वाकारः। तौ चोभौ मनःशरीरोपाधिकौ धर्मौ भवतः। अनुवाद्यत्वविधेयत्वे तु शब्दोपाधिकौ धर्मौ स्तः। अनुवाद्यत्वं नाम मानान्तरज्ञातस्यानुकथ्यमानत्वम्। विधेयत्वं चाज्ञातस्यानुष्ठेयत्वेन प्रतिपाद्यमानत्वम्। फलस्य प्राधान्यं नाम साध्यत्वेन, यागस्योपसर्जनत्वं च साधनत्वेन बोध्यम्। तथा यागस्योद्देश्यत्वं नाम मानान्तरसिद्धस्य विधेयान्वयितया निर्देश्यत्वमन्यद्यथोक्तम्।

न चैवं होमे विरुद्धत्रिकद्वयप्रसङ्गः। तस्य साध्यत्वेन साधनत्वेन चात्र विधौ युगपत्तन्त्रेणान्वयानङ्गीकरात्, किंतु साध्यत्वेनैव। तथा च होमस्योद्देश्यत्वमनुवाद्यत्वं प्रधानत्वमेव नतूपादेयत्वादिकम्। तस्मान्न विरुद्धत्रिकद्वयापत्तिरित्याशयेनाह—गुणविधौ चेति। धात्वर्थस्य साध्यत्वेनैवान्वय इति। धात्वर्थस्य यागदानहोमादेः साध्यत्वेनैवेत्यनेन साधनत्वेनान्वयं वारयति। साधनत्वेनान्वयस्तु धात्वर्थस्योत्पत्तिविधावधिकारविधौ च भवति, नतु गुणविधावित्यर्थः।

ननु गुणविधौ धात्वर्थस्य साध्यत्वेनैवान्वये 'दध्नेन्द्रियकामस्य जुहुया'दित्यत्र दध्ना होमं भावयेदिन्द्रियकामस्येति वाक्यार्थः स्यात्। तथा चेन्द्रियस्य साध्यत्वेनानन्वये तस्याफलत्वप्रसङ्गः। न च नात्र गुणविधिः, गुणपदस्यानर्थकत्वप्रसङ्गात्। होमस्योभयरूपेणान्वये तु पूर्वोक्तदोषापत्तिश्चेत्याशङ्क्याह—क्वचिदित्यादिना। यद्वा,—गुणविधौ धात्वर्थस्य साध्यत्वेनैवान्वयो नान्यथा। यत्र तु तृतीययोपात्तं दध्यादिगुणकरणत्वं तस्य प्रत्ययार्थत्वेन दध्यादिगुणादपि प्रधानत्वात्फलभावनायां करणत्वेन विधीयते, तत्र तु धात्वर्थस्याश्रयत्वेनैवान्वय इत्याह—क्वचिदित्यादिना। क्वचिदिति यत्र दध्यादिगुणकरणत्वस्य फलभावनायां करणत्वेन विधानं तत्रेत्यर्थो न तु गुणविधावित्यर्थः। तच्चेति। तृतीययोपात्तं दधिकरणत्वं चेत्यर्थः। होमाश्रयदधिकरणत्त्वेनेन्द्रियं भावयेदिति वाक्यार्थः। तथा च करणस्य कर्तुर्व्यापारव्याप्यत्वनियमात् केवलदध्नः कर्तृव्यापारानाविष्टस्य करणत्वानुपपत्तेर्होमस्य च वाक्यान्तरप्राप्तत्वात्तयोर्विध्यनुपपत्तेः। होमस्य गुणसंबन्धविधाने फलपदस्यानर्थकत्वप्रसङ्गात्तस्यफलसंबन्धविधौ च गुणपदस्यानर्थक्यापातात्फलगुणोभयसंबन्धविधौ च प्राप्ते कर्मण्यनेकपदार्थविधाने वाक्यभेदप्रसङ्गात् प्राप्ते कर्मण्यनेकपदार्थविधानस्य च वाक्यभेदापादकस्य 'प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः। अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नत' इति वचनविरोधेन स्वीकर्तुमशक्यत्वात्तृतीययोपात्तस्य दधिकरणत्वस्य होमनिरूपितत्वेन फलभावनायां करणत्वमत्र विधीयत इति भावः। प्राप्ते कर्मणीत्यत्र कर्मणो द्रव्याद्युपलक्षणत्ववद् गुणस्यापि प्रधानोपलक्षणत्वमेकोद्देशेनानेकविधावेव वाक्यभेदात्। अत एव गृहैकत्वाधिकरणे 'गृहं संमार्ष्टी'त्यत्र ग्रहोद्देशेनैकत्वसंमार्जनविधौ वाक्यभेदाद् गृहैकत्व-

**मविवक्षितमित्युक्तम्। तेन 'दध्नेन्द्रियकामस्य जुहुया'दित्यत्रेन्द्रियसंबन्धस्य प्रधान-संबन्धत्वेऽपि न क्षतिः। ननु कर्मणो द्रव्योपलक्षणत्वं भवतु, गृहस्य द्रव्यत्वाद् गुणस्य प्रधानो-पलक्षणत्वं कुत्र चरितार्थमिति चेत्, न। रेवत्यधिकरणे चरितार्थत्वात्। तत्र हि 'एतस्यैव रेवतीषु वारवन्तीयमयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेते'ति। तत्र च ननु पशु-कामस्य 'रेवतीर्नः सधमाद' इत्यादिरेवतीष्वृक्षु वारवन्तीयं साम गातव्यं, तथा चात्र रेवती-नामृचां वारवन्तीयनामकेन साम्ना यः संबन्धः सोऽयं पशुफलायाग्निष्टुति गुणो विधीयते। एतस्यैवेत्यत्र प्रकृतपरामर्शकेनैतच्छब्देनान्यव्यावर्तकेन चैवकारेणाग्निष्टुतः समर्प्यमाणत्वादिति चेत्, न। रेवत्यृगाधारकवारवन्तीयसाम्नोऽग्निष्टुत्कर्मसाधनत्वं पशुफलसाधनत्वं चेत्युभयस्य विधाने वाक्यभेदप्रसङ्गात्। ततश्च पशुफलकं रेवत्यृगाधारकवारवन्तीयगुणविशिष्टं कर्मान्तर-मत्र विधीयते न प्रकृते गुणः। एतच्छब्दस्य तु बुद्धिस्थपरामर्शकत्वेनाप्युपपत्तेः, एवकारस्य चायोगव्यवच्छेदकत्वमन्ययोगव्यवच्छेदकत्वं वोपपद्यत इत्युक्तम्। तस्मात्प्राप्ते होमे गुणफल-संबन्धोभयविधौ वाक्यभेदो दुष्परिहर इत्यलम्।**

यहाँ अङ्ग तथा प्रधान के सम्बन्ध का बोधन अपेक्षित है। वस्तुतः इससे ज्ञात होता है कि कौन अङ्ग है और कौन प्रधान, तथापि अङ्गत्व का ही ज्ञान विशेषतः अपेक्षित है। अङ्ग सामान्यतः द्रव्य, गुण, देवता आदि हुआ करते हैं जिनसे अथवा जिनके लिए याग का सम्पादन होता है। व्याकरण के नियमानुसार कर्त्ता प्रधान होता है जो प्रथमा की विभक्तियों से सूचित है, द्वितीया, तृतीया आदि विभक्तियाँ गौण होती हैं, क्योंकि इन विभक्तियों में अन्त होने वाले शब्दों का क्रिया से सीधा सम्बन्ध नहीं हो पाता है। इनसे क्रिया के सम्पादन में सहायता तो मिलती है किन्तु वे स्वयं साक्षात् सम्पादक नहीं होते। मीमांसा में क्रिया की प्रधानता होती है। इससे साक्षात् सम्बद्धता के कारण कर्त्ता भी प्रधान होता है, शेष विभक्तियाँ गौण होती हैं। अतः प्रथमा के अतिरिक्त शेष विभक्तिगों में अन्त होने वाले पदों से गौणता का ही ज्ञान होता है। 'दध्ना' तृतीया में है, अतः उससे भी गौणता की ही अभिव्यक्ति होगी। इसी प्रकार ग्रन्थ में आगे द्वितीया से सप्तमी तक की विभक्तियों में अन्त होने वाले पदों का यथासंभव उदाहरण दिया गया है। गौणत्व का ज्ञान कराने से ही इस विधि का दूसरा नाम गुणविधि भी रखा गया है।

**गुणविधि में पदों का अन्वय**—उत्पत्तिविधि में निर्दिष्ट कर्म या यागविशेष का ग्रहण करण के रूप में करने का विधान है, वहाँ साध्य स्वर्ग आदि रहा है, किन्तु यहाँ पर ( विनियोगविधि में ) सम्पादनीय याग ही साध्य होता हैं। यही स्वाभाविक भी है क्योंकि विनियोगविधि का कार्य ही है याग के अङ्गों का ज्ञान कराना। अङ्ग अङ्गी के ही साधक होते हैं, अतः यहाँ याग अङ्गी हुआ और उसके लिए उपयोगी वस्तुएँ साधन हुई।

विनियोगविधि में अङ्ग के साध्य की प्राप्ति किसी दूसरे वाक्य से अपेक्षित नहीं. अपितु धातु का अर्थ ही साध्य का कार्य देता है। यहाँ कर्म या साध्य का अर्थ व्याकरणसम्मत द्वितीयान्तता नहीं है, अपितु कर्म याग का वाचक है जो वस्तुतः 'यज' या 'हु' धातु का अर्थ होता है। उदाहरण के लिए 'दध्ना जुहोति' ही लिया जाता है। यहाँ तृतीयाविभक्त्यन्त 'दधि' अङ्ग है। 'जुहोति' में 'हु' धातु तथा तिप् प्रत्यय वर्तमान में है। 'हु' धातु का अर्थ 'होम' होता है। वही प्रस्तुत प्रसङ्ग में अङ्गी है।

**धात्वर्थ की आश्रयता**—ग्रन्थकार के मतानुसार सामान्यतः धात्वर्थ द्रव्य आदि अङ्गों का साध्य ही होता है, किन्तु कहीं-कहीं वह साध्य न होकर आश्रय बनता है। उदाहरणार्थ—'दध्ना इन्द्रियकामस्य जुहुयात्' एक गुणविधि है जहाँ दधिनामक द्रव्य इन्द्रियबल को बढ़ाने के लक्ष्य से होम में विहित है। यहाँ फल इन्द्रिय है, ठीक वैसे ही जैसे 'ज्योतिष्टोमेन स्वर्गकामो यजेत' में

स्वर्ग है। अतः जैसे वहाँ उस मन्त्र का अर्थ है 'ज्योतिष्टोमेन स्वर्ग भावयेत्, वैसे ही 'दध्ना इन्द्रियकामस्य जुहुयात्' का भी अर्थ हुआ 'दध्ना इन्द्रियं भावयेत्' अथवा 'दधिकरणत्वेन इन्द्रियं भावयेत्'। स्पष्ट है कि यहाँ साध्य इन्द्रिय है न कि धात्वर्थ, जैसा पहले निरूपित किया है। अब प्रश्न यह है कि 'दधि' 'इन्द्रिय-रूप' साध्य को बलवृद्धि करता कैसे है? वह स्वतन्त्र रूप में इन्द्रिय का साक्षात् बलवर्धन न करके याग के माध्यम से करता है। अर्थात् दधि से याग सम्पन्न होता है और याग से इन्द्रिबल की वृद्धि होती हैं। इस पर याग या होम के माध्यम से अर्थात् उसमें स्थित होकर दधि इन्द्रिय की भावना करता है। यदि दधि के भक्षण आदि से स्वतः इन्द्रिय में बलसंचार हो जाता, तो यह प्रक्रिया न ग्रहण करनी पड़ती और न तो रागतः प्राप्त भक्षण आदि धर्म का विषय ही बन पाता। इससे सिद्ध है कि दधि से होम होता है जिसके माध्यम से इन्द्रियबल की वृद्धि होती है। याग के लिए इन्द्रिय प्रधान हो सकती है, किन्तु दधि के लिए प्रधान तो याग ही है। यह याग कहीं अन्यत्र से नहीं, अपितु जुहुयात् या यजेत् के धातु 'हु' या 'यज' से ही प्राप्त होता है, अन्यथा रागतः प्राप्त दधि भोजन का श्रुति से विधान ही न होता। अतः यहाँ दधिकरणत्व होम के आश्रित होता है। यह आश्रय होम दधि के समीप होने से प्राप्त होता है। यहाँ धात्वर्थ से समीपता का अर्थ दधि का होम के सम्पादन में सहायक होना है, जो एक वाक्य में प्रयोग से संभव है। करण साध्य से सम्बद्ध होने के कारण निकट होता है। यद्यपि 'जुहुयात्' में प्रत्यांश 'त' 'हू' धातु के अधिक निकट है क्योंकि एक पद में ही है तथापि प्रत्यय 'त' के भी लिङंश का साध्य उसी के आख्यात से ज्ञेय आर्थीभावना हैं और आर्थीभावना का साध्य धात्वर्थ है होम, याग आदि। इनका सम्बन्ध साक्षात् बोध्यबोधक है जब कि करण का आश्रयाश्रयी सम्बन्ध है।

**अधिकारविधि से भेद**—'दध्ना इन्द्रियकामस्य जुहुयात्' वाक्य यद्यपि गुणविधि के उदाहरण के रूप में प्रस्तुत किया गया है, तथापि बाह्य दृष्टि से यह 'ज्योतिष्टोमेन स्वर्गकामो यजेत' की भाँति अधिकार-विधि सा प्रतीत होता है, क्योंकि दोनों में अभीष्ट का निर्देश है, प्रथम में अभीष्ट है इन्द्रिय-सामर्थ्य और दूसरे में स्वर्ग। किन्तु वस्तुतः दोनों में अन्तर है। अधिकारविधि में होम स्वयं करण होता है इष्टसिद्धि में, किन्तु गुण-विधि में द्रव्य आदि का निर्देश होता है जो करण-रूप होम आदि का ही अङ्ग होता है। अतः यह अङ्गभूत दधि आदि द्रव्य इष्ट के साक्षात् साधन न होकर परम्परया होते हैं। 'दध्ना इन्द्रियकामस्य जुहुयात्' सामान्य गुणविधि 'दध्ना जुहोति' से अवश्य भिन्न है, अतः इसका स्वरूप स्वल्प भिन्न होने पर भी गुणविधि ही है।

## विधेःश्रुत्यादिषट्प्रमाणानि

**( १७ ) एतस्य विधेः सहकारिभूतानि षट्प्रमाणनि—श्रुति–लिङ्ग–वाक्य–प्रकरण–स्थान–समाख्यारूपाणि। एतत्सहकृतेनानेन विधिनाङ्गत्वं परोद्देशप्रवृत्त-कृतिसाध्यत्वरूपं पारार्थ्यापरपर्यायं ज्ञाप्यते।**

इस विनियोग विधि के सहायक छः प्रमाण १. श्रुति २. लिङ्ग ३. वाक्य ४. प्रकरण ५. स्थान ६. समाख्या रूप में हैं। इन छः प्रमाणों की सहायता से इस विनियोगविधि के अङ्गत्व का ज्ञान होता है जिस ( अङ्गत्व ) का रूप है 'पर' अर्थात् उत्कृष्ट स्वर्गादिरूपी फल अथवा पर अर्थात् मुख्य दर्शपूर्णमास आदि यागरूपी साधन, अथवा अपने से भिन्न उक्त किसी के भी उद्देश्य से कार्य में प्रवृत्त हुए पुरुष की कृति—व्यापार से सिद्ध होने वाला। ( यह अङ्गत्व ) पारार्थ्य अर्थात् 'पर' के लिए होने का दूसरा नाम है।

एतस्य विधेरिति। **लक्षितस्य विनियोगविधेरित्यर्थः।** एतत्सहकृतेनेति। **एतत्प्रमाणषट्कसहकृतेनेत्यर्थः। विनियोगविधिसहकारित्वं च तेषां विनियोगविधिकृतविनियोगे प्रमाणत्वाद्भवतीति बोध्यम्। अनेन विधिनाङ्गत्वं ज्ञाप्यत इत्यन्वयः। अङ्गत्वं लक्षयति—**

परोद्देशेत्यादिना। यद्वा,—ननु न शेषत्वापरनामकस्य विनियोगविधिबोध्यत्वं संभवति तस्यानिरूपणात्। तदनिरूपणं च लक्षणप्रमाणाभावान्न तावदविनाभूतत्वं तत्त्वम्, आग्नेयादीनां षण्णामविनाभूतत्वेन परस्परं शेषत्वापत्तेः। नापि प्रयोज्यत्वं, शेषत्वं 'पुरोडाशकपालेन तुषानुपवपती'त्यत्र तुषोपवपनं प्रति शेषत्वेन श्रुतस्यापि पुरोडाशकपालस्योपवापाप्रयोज्यत्वात्। न च विध्यन्तरविहितत्वं शेषत्वमिति वाच्यम्। 'इषे त्वेति च्छिनत्ती'त्यत्र पलाशशाखाच्छेदनस्य सत्यपि शेषत्वे विध्यादिविहितत्वेनाव्याप्तिप्रसङ्गात्। नापि तत्र प्रत्यक्षं प्रमाणं, लोके तत्त्वेऽपि वेदे तस्य शब्दैकगम्यत्वोपगमात्। नापि शब्दः, केनापि शब्देन शेषशेषिभावस्याप्रतीयमानत्वात्। लोके क्रियाकारकान्वयस्यैव व्युत्पत्तिप्रयोजकत्वदर्शनेन तत्र कस्यापि शब्दस्य व्युत्पत्त्यग्रहात्। तत्र च न हेतुरप्युपलभ्यत इति चेत्, अत्रोच्यते—न तावदस्य लक्षणासंभवः, पारार्थ्यस्यैव निर्दुष्टशेषत्वलक्षणत्वात्। नापि तत्र प्रमाणाभावः, शब्दगम्यत्वात्। न च तत्र व्युत्पत्त्यभावात्कथं शब्दगम्यत्वमिति वाच्यम्। शेषशेषिभावस्यान्वयेऽन्तर्भावात्तत्र व्युत्पत्त्युपपत्तेः। न हि गुणप्रधानभावमन्तरेणान्वयः संभवति, द्वयोः प्रधानयोर्गुणयोर्वा परस्पराकाङ्क्षारहितत्वेनान्वययोग्यत्वाभावात्। ततो यथा क्रियाकारकतदन्वयाः शब्दगम्यास्तथा तदन्वयान्तर्गतः शेषशेषिभावोऽपि शब्दगम्य एव। नापि तत्र हेतोरभावः, विवादास्पदः प्रयाजानुयाजप्रोक्षणादिः शेषो भवितुमर्हति, पारार्थ्यात् भृत्यादिवदिति हेतुसत्त्वात्। न च पारार्थ्यस्यैव लक्षणत्वे च हेतुत्वे सांकर्यप्रसङ्ग इति वाच्यम्। सेनानां महारथिवदाकारभेदेन तद्भेदोपपत्तेः। दृष्टान्ते गृहीतव्याप्तिं हि सहायीकृत्य बोधकत्वाकारो हेतुरितरव्यावृत्त्या बोधकत्वाकारश्च लक्षणमिति तद्भेद इत्यभिप्रेत्याङ्गत्वं लक्षयति—परोद्देशेति। परं स्वर्गादिरूपमुत्कृष्टं साध्यं फलं तदुद्देशेन संकलनया मनसि सिद्धवत्करणेन तत्साधनयागादिषु प्रवृत्तस्य पुरुषस्य कृतिसाध्यत्वरूपं कृतिव्याप्यत्वरूपमित्यर्थः। तथा च स्वर्गफलोद्देशेन दर्शादिषु प्रवृत्तपुरुषकृतिव्याप्यत्वं प्रयाजानुयाजावघातप्रोक्षणादीनां सुप्रसिद्धमिति तेषां शेषत्वम्। यद्वा,—परशब्दो दर्शादिपरः। तथा च तदुद्देशेन प्रवृत्तपुरुषकृतिव्याप्यत्वं प्रयाजादीनां भवतीति तेषां तत्त्वम्, दर्शादेस्तु प्रयाजाद्युद्देशेन प्रवृत्तपुरुषकृतिव्याप्यत्वाभावान्न तत्रातिव्याप्तिः। केवलप्रयाजाद्युद्देशेन कस्यचिदपि पुरुषस्य प्रवृत्त्यभावादिति ध्येयम्। ननु 'कर्माण्यपि जैमिनिः फलार्थत्वात्', 'तत्फलं च पुरुषार्थत्वात्' 'पुरुषश्च कर्मार्थत्वादि'त्यत्र जैमिनिसूत्रत्रये कर्मफलपुरुषाणामपि शेषत्वमुक्तं, तत्र च कर्मणां फलोद्देशेन प्रवृत्तकृतिसाध्येऽपि फलपुरुषयोस्तु पुरुषकर्मोद्देशेन प्रवृत्तपुरुषकृत्यसाध्यत्वात्कथं शेषत्वमिति चेत्, अत्र वक्तव्यम्—स्वर्गस्य साक्षात्कृतिसाध्यत्वाभावेऽपि यदा पुरुषः स्वस्वर्गोद्देशेन दर्शादिषु प्रयतते तदैव कालान्तरेऽपूर्वद्वारेण स्वर्गो जायते, नान्यथेति भवति पुरुषकृतिव्याप्यत्वं तस्य, तथा स्वर्गफलोद्देशेन दर्शाद्युद्देशेन वा प्रवृत्तः पुरुषो यदैव तदनुष्ठानानुकूलं स्वं प्रयत्नेन संपादयति तदैव कर्म निष्पद्यते नान्यथेति तस्यापि भवति पुरुषकृतिव्याप्यत्वमिति सर्वमनवद्यम्।

यह भाव व्यक्त हो चुका है कि विनियोगविधि का वास्तविक कार्य है अङ्गत्व का ज्ञापन करना। 'कोई वाक्य अङ्ग कैसे है' आदि का ज्ञान कराने के लिए विनियोग विधि को कुछ सहायता अपेक्षित होती है। द्रव्य, गुण, आदि होम के सहायकों का उल्लेख होने से उनकी अङ्गता तो स्वतः सिद्ध है, किन्तु वे किस यागविशेष से सम्बद्ध है और कर्म, करण, अधिकरण आदि किस रूप में सम्बद्ध है

आदि के प्रामाणिक ज्ञान से लिए जिनका अवलम्ब लिया जाता है वे श्रुति आदि प्रमाण छः है। इनका लक्षण और उदाहरण आगे यथा स्थान दिया जायेगा।

'अङ्ग' का लक्षण ग्रन्थकार ने स्पष्ट दिया है। कोई व्यक्ति किसी उत्कृष्ट इष्ट स्वर्ग आदि की कामना करता है। यही उसका 'परोद्देश' है। इस उत्कृष्ट लक्ष्य के लिए वह प्रवृत्त होता है। उसकी इस प्रवृत्ति का भी साध्य दर्शपूर्णमास आदि याग होता है। अतः उत्कृष्ट अभीष्ट स्वर्ग आदि की प्राप्ति के लिए दर्शपूर्णमास आदि यागों में प्रवृत्त पुरुष के व्यापार प्रयाज, अनुयाज आदि अङ्ग कहे जाते हैं। 'पर' का अर्थ उत्कृष्ट न लेकर यदि प्रधान या मुख्य समझा जाये तो उक्त वाक्यांश का अर्थ होगा पुरुष के द्वारा किया जा रहा वह कार्यसमूह जिससे मुख्य याग दर्शपूर्णमास आदि निष्पन्न होते हैं। ये कार्यसमूह प्रयाज, अनुयाज आदि ही हैं। 'पर' का अर्थ 'दूसरा' अर्थात् अपने से भिन्न भी होता है। अतः अपने से भिन्न मुख्य फल या प्रधान साधन को सम्पन्न करने के लिए प्रवृत्त पुरुष के व्यापारों से सिद्ध होने वाले कार्य भी, जो प्रयाज आदि ही हैं, अङ्ग कहे जाते हैं। 'पर' के उक्त तीनों अर्थों--उत्कृष्ट लक्ष्यभूत स्वर्गादि, प्रधान याग दर्शपूर्णमास आदि अथवा अपने से भिन्न जो कुछ भी हो,—से यही सिद्ध होता है कि अङ्ग की सार्थकता दूसरे के लिए होने में ही है। इस निर्गलित अर्थ को 'पारार्थ्यापरपर्याय'—दूसरे के लिए होने का नामान्तर शब्दों से व्यक्त किया गया है। जब किसी वस्तु की सार्थकता दूसरे के लिए होने में निहित होती है तब स्पष्ट है कि वह स्वयं में गौण होती है और जिसके लिए हैं वह प्रधान या पर होती है। इसी से अङ्गता, गौणता का भाव व्यक्त करती है। उदाहरणार्थ—प्रयाज, अनुयाज आदि की सार्थकता अपने लिए नहीं है। वे इसीलिये सार्थक हैं कि दर्शपूर्णमास आदि यागों का समष्टि-अपूर्व सम्पन्न हो सके।

**( १८ ) तत्र निरपेक्षो रवः श्रुतिः। सा च त्रिविधा—विधात्री, अभिधात्री, विनियोक्त्री च। तत्राद्या लिङ्गाद्यात्मिका। द्वितीया व्रीह्यादिश्रुतिः। यस्य च शब्दस्य श्रवणादेव संबन्धः प्रतीयते सा विनियोक्त्री।**

उन ( छः प्रकार के प्रमाणों ) में ( शेषत्व अथवा अङ्गत्व का बोध कराने के लिए दूसरे प्रमाण की ) आवश्यकता से रहित शब्द श्रुति ( नामक प्रमाण ) है। वह तीन प्रकार की होती हैं—१. विधात्री २. अभिधात्री और ३. विनियोक्त्री। इनमें से पहली लिङ् आदि रूप वाली हैं। दूसरी व्रीहि आदि श्रुति है। और जिस शब्द के सुनने से ही सम्बन्ध प्रतीत होता है वह विनियोक्त्रीविधि है।

**तत्र श्रुतिं लक्षयति—तत्र निरपेक्षो रव इति। तत्र षण्णां श्रुत्यादिप्रमाणानां मध्ये इत्यर्थः। स्वकरणीये शेषत्वबोधे प्रमाणान्तनिरपेक्षः शब्दः श्रुतिरित्यर्थः। रव इत्युक्ते वाक्यादावतिप्रसङ्गस्तद्वारणाय निरपेक्ष इत्युक्तम्। तां च श्रुतिं विभजते—सा च त्रिविधेति। विधात्री विधानकर्त्री, अभिधात्री अभिधानकर्त्री, विनियोक्त्री विनियोगकर्त्री। तत्राद्यामुदाहरति—तत्राद्या लिङाद्यात्मिकेति। तत्र तिसृणां श्रुतीनां मध्य इत्यर्थः। आदिना लेडादिग्रहः। अभिधात्रीमुदाहरति—द्वितीया व्रीह्यादीति। तृतीयां विनियोक्त्रीं लक्षयति—यस्य चेत्यादिना। संबन्ध इति। विनियोज्यविनियोजकभावःसंबन्ध इत्यर्थः। शेषशेषिणोरिति वा शेषः।**

श्रुति प्रमाण शेष प्रमाणों में प्रथम है, जिससे यह स्पष्ट ज्ञात होता है कि कौन-सी वस्तु किसका अङ्ग है। ध्यान रखना है कि श्रुति का अर्थ वेद के शब्द या ध्वनि है न कि श्रोत्रेन्द्रिय या सुनना। यहाँ वह शब्द पारिभाषिक है जिसके लक्षण में निहित 'निरपेक्ष' शब्द महत्त्वपूर्ण है। इस पद के

प्रयोग से श्रुति की भिन्नता उन लिङ्ग वाक्य आदि प्रमाणों से सिद्ध होती है जो सापेक्ष हैं, लिङ्ग आदि की सापेक्षता इसलिये सिद्ध होती है क्योंकि वे क्रमशः दुर्बल होते जाते हैं और अर्थ-प्रत्यायन के लिए अपने पूर्ववर्तियों पर आश्रित होते हैं, अर्थात् लिङ्ग श्रुतिसापेक्ष है, वाक्य लिङ्गसापेक्ष और यही क्रम चलता रहता है। किन्तु श्रुति को किसी की अपेक्षा नहीं। वह ऐसा शब्द है जो विनियोग में अङ्गत्व के ज्ञापन के लिए स्वयं समर्थ है। शेष प्रमाणों से यह प्रबलतम है।

**श्रुति के तीन भेद**—यहाँ श्रुति के वैदिक शब्दों का पर्याय-सा होने से ग्रन्थकार ने एक प्रकार से पूरे वेद का ही तीन भागों में विभाजन कर दिया है। विधान करने वाली–विधानकर्त्री–विधि को ही विधात्री कहते हैं। इसका उदाहरण 'ज्योतिष्टोमेन स्वर्गकामः यजेत', 'अग्निहोत्रं जुहोति' सदृश वाक्यों में हैं, जहाँ 'यजेत' और 'जुहोति' का सीधा सम्बन्ध क्रमशः ज्योतिष्टोम एवं अग्निहोत्र से हो जाता है। शाब्दीभावना के प्रसङ्ग में स्पष्ट किया जा चुका है कि विधायिका शक्ति लिङ् में ही रहती है, अतः यहाँ भी स्पष्ट है कि विधात्रीविधि लिङादि के रूप में ही प्राप्त होती है। 'लिङादि' में 'आदि' का अर्थ 'लेट्' अथवा विधान की शक्ति से युक्त अन्य लकार हैं।

अभिधात्री का दूसरा नाम अभिधानकर्त्री है। अभिधात्री श्रुति वैदिक वाक्य में आये उन शब्दों को कहते हैं जो कोई विधान नहीं करते, अपितु किसी वस्तुमात्र का अभिधा से कथन करते हैं। यथा–'व्रीहीन अवहन्ति', 'व्रीहीन् प्रोक्षति' आदि में 'व्रीहीन्' पद का अर्थ केवल 'धान के दाने' है।

विनियोक्त्री श्रुति उन शब्दों का ज्ञापन करती है जिनको सुनते ही अङ्ग का प्रधान पदार्थ से सम्बन्ध प्रकट हो जाता हैं। इसके उदाहरण आगे दिये जायेंगे। मूल में पठित 'सा विनियोक्त्री' में 'सा' 'सः' शब्द का वाचक है। विनियोक्त्री के साथ होने से स्त्रीलिङ्ग हुआ है।

श्रुति के विभागों में विधात्री तथा अभिधात्री का नाममात्र लिया गया है। उनका विशेष निरूपण यहाँ ग्रन्थकार ने नहीं किया है, क्योंकि वस्तुतः प्रसङ्ग विनियोग का है। सामान्यनिर्देश यों ही पूर्णता के लिए कर दिया गया है, यद्यपि बहुत अपेक्षित नहीं था।[1]

ग्रन्थ के मूल अंश में प्रयुक्त 'सम्बन्ध' का अर्थ किसी भी प्रकार का सम्बन्ध नहीं है, वस्तुतः यहाँ अपेक्षित है विनियोज्य-विनियोजक-भाव। कौमुदीकार के अनुसार 'सम्बन्ध' पद के पूर्व 'शेष-शेषिणोः'—अङ्ग एवं अङ्गी-पद का ग्रहण कर लेने से अर्थबोध में स्पष्टता होती।

## विनियोक्त्री श्रुतिस्त्रिधा

**( १९ ) सापि त्रिविधा—विभक्तिरूपा, एकाभिधानरूपा, एकपदरूपा चेति। तत्र विभक्तिश्रुत्या अङ्गत्वं यथा 'व्रीहिभिर्यजेते'ति तृतीयाश्रुत्या व्रीहीणां यागाङ्गत्वम्। तदपि पुरोडाशप्रकृतितया। यथा पशोर्हृदयादिरूपहविः प्रकृतितया यागाङ्गत्वम्।**

**'अरुणयापिङ्गाक्ष्या एकहायन्या गवा सोमं क्रीणाती' त्यस्मिन् वाक्ये आरुण्यस्यापि तृतीयाश्रुत्या क्रयाङ्गत्वम्। तदपि गोरूपद्रव्यपरिच्छेदद्वारा न तु साक्षात्, अमूर्तत्वात्।**

**'व्रीहीन्प्रोक्षती'ति प्रोक्षणस्य व्रीह्यङ्गत्वं द्वितीयाश्रुत्या। तच्च प्रोक्षणं न व्रीहिस्वरूपार्थम्, तस्य तेन विनाप्युपपत्तेः, किन्त्वपूर्वसाधनत्वप्रयुक्तम्। व्रीहीनप्रोक्ष्य यागानुष्ठानेऽपूर्वानुपपत्तेः। एवं सर्वेष्वङ्गेष्वपूर्वप्रयुक्तमङ्गत्वं बोध्यम्।**

---

१. यद्यपि अत्र विनियोगप्रस्तावे विधात्र्यभिधात्र्योः निरूपणं नातीव संगतम्, तथापि श्रुतिप्रसङ्गात् तयोः विधिसहकारित्वाच्च तन्निरूपणमिति बोध्यम्। मीमांसान्यायप्रकाश में सारविवेचनी,

एवम् 'इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्त' इत्यत्र द्वितीयाश्रुत्या मन्त्रस्याश्वाभिधान्यङ्गत्वम्।

'यदाहवनीये जुहोती'त्याहवनीयस्य होमाङ्गत्वं सप्तमीश्रुत्या। एवमन्योऽपि विभक्तिश्रुत्या विनियोगो ज्ञेयः।

'पशुनायजेते'त्यत्रैकत्वपुंस्त्वयोः समानाभिधानश्रुत्या कारकाङ्गत्वम्। यजेतेत्याख्याताभिहितसंख्याया भावनाङ्गत्वं समानाभिधानश्रुतेरेव एकपदश्रुत्या च यागाङ्गत्वम्।

न चामूर्तायास्तस्याः कथं भावनाङ्गत्वमिति वाच्यम्, कर्तृपरिच्छेदद्वारा तदुपपत्तेः। कर्ता चाक्षेपलभ्यः।

आख्यातेन हि भावनोच्यते। सा च कर्तारं विनानुपपन्नेति तमाक्षिपति।

वह ( विनियोक्त्री श्रुति ) भी तीन प्रकार की है—१. विभक्तिरूपा २. एकाभिधानरूपा और ३. एकपदरूपा। इनमें विभक्तिश्रुति से अङ्गत्व का उदाहरण 'व्रीहिभिर्यजेत'—धान से याग करे—( सदृश वाक्यों में मिलता हैं। व्रीहि में प्रयुक्त ) तृतीया विभक्ति से व्रीहि की याग की अङ्गता ( ज्ञात होती है। ) वह भी ( अर्थात् व्रीहि की यागाङ्गता भी ) पुरोडाश की प्रकृति होने से ही ( सिद्ध होती है ) जैसे कि हृदय आदि रूपी हव्य की प्रकृति होने से ही पशु की यागाङ्गता ( स्वीकार की जाती है। )

'अरुणया एकहायन्या गवा सोमं क्रीणाति'—रक्तवर्ण, एकवर्षीया गौ से सोम खरीदता है—इस वाक्य में रक्तवर्ण की क्रय की अङ्गता तृतीयाश्रुति से प्राप्त होती है। वह भी ( अर्थात् क्रय की अङ्गता भी ) गौरूपी द्रव्य के विशेषण के रूप से सिद्ध होती है, न कि साक्षात, क्योंकि ( अरुणता स्वयं में ) अमूर्त है।

'व्रीहीन् प्रोक्षति'—धानों का प्रोक्षण करता है—में प्रोक्षण की व्रीहि की अङ्गता द्वितीया श्रुति के कारण है। और वह प्रोक्षण भी व्रीहि की स्वरूप की सिद्धि के लिए नहीं ( अभिप्रेत है ), क्योंकि उसकी ( धान के स्वरूप की ) उस ( प्रोक्षण ) के अभाव में भी निष्पत्ति होती है, अपितु ( प्रोक्षण का ) प्रयोग अपूर्व के साधन के लिए होता है, क्योंकि धान का प्रोक्षण किये विना याग का अनुष्ठान करने से अपूर्व की निष्पत्ति नहीं होती। इसी प्रकार सभी अङ्गों में अपूर्व की निष्पत्ति के लिए ही अङ्गता समझनी चाहिये।

इसी भाँति 'इमाम् अगृभ्णन् रशनाम् ऋतस्य' इति अश्वाभिधानीमादत्ते'--फल से सम्बन्धित सत्य ( ऋतस्य ) की इस रज्जु को पकड़ा, इस मन्त्र से घोड़े की रस्सी को पकड़ता है--इस वाक्य में द्वितीया श्रुति से मन्त्र की अश्वाभिधानी की अङ्गता सिद्ध होती है।

'यदाहवनीये जुहोति'--जो कि आहवनीय अग्नि में होम करता है--इसमें आहवनीय होम का अङ्ग सप्तमी श्रुति से सिद्ध होता है। इसी प्रकार विभक्ति-श्रुति के द्वारा और भी विनियोग समझे जाने चाहिये।

'पशुना यजेत' इस वाक्य में एकत्व संख्या तथा पुल्लिङ्गता दोनों की कारक की अङ्गता समानाभिधानश्रुति से होती है। 'यजेत' में आख्यात से द्योतित संख्या समानाभिधानश्रुति से ही ( शाब्दी ) भावना का अङ्ग होती है और एकपदश्रुति से वह ( धात्वर्थ ) याग का अङ्ग होती है।

'अमूर्त वह ( संख्या ) भावना का अङ्ग कैसे हो सकती है, यह नहीं कहना चाहिये, क्योकि उस ( संख्या की अङ्गता ) की संगति कर्त्ता के सम्बन्ध से हो जाती है। ( उक्त न होने से ) कर्त्ता की प्राप्ति आक्षेप—अर्थापत्ति-से होती हैं।

आख्यात से ( आर्थी ) भावना का कथन होता है। वह ( भावना ) कर्त्ता के अभाव में संभव नहीं होती, अतः उस ( कर्त्ता ) का आक्षेप कर लेती है—( अर्थापत्ति से ग्रहण कर लेती है। )

**विनियोक्त्रीमपि श्रुतिं** विभजते—सापि त्रिविधेति। **तत्र विभक्तिरूपां विनियोक्त्रीमुदाहरति**—तत्रेति। **यद्वा,–ननु विनियोक्त्र्याः श्रुतेर्लक्षणविभागावनुपपन्नौ तस्या अङ्गत्वाबोधकत्वादित्याशङ्क्य तत्र विभक्तिश्रुतेरङ्गत्वबोधकत्वं दर्शयति**—तत्रेति। **तिसृणां विनियोक्त्रीणां मध्य इत्यर्थः।** विभक्तिश्रुत्याङ्गत्वं **बोध्यत एव तथोपलब्धेरिति शेषः।** कुत्रोपलम्भ इति **वीक्षायां तत्रोदाहरणमाह**—यथा व्रीहिभिरिति। तदपीति। **व्रीहीणां यागाङ्गत्वमपीत्यर्थः। व्रीहीणां पुरोडाशप्रकृतितया यागाङ्गत्वे दृष्टान्तमाह—यथा** पशोरिति। **'अथ हृदयस्याग्रेऽवद्यत्यथ वक्षस' इत्यादिशास्त्रात्, पशोर्हृदयादिरूपहविरुपादानतयैव** यागाङ्गत्वं न साक्षात्, **तद्वदत्रापीत्यर्थः। क्वचित्तु साक्षात्पशोरेव यागाङ्गत्वं यथा पात्नीवतयागे। तत्र हि पशोराग्नेयस्य जीवत एवोत्सर्गः क्रियते, 'पर्यग्निकृतं पत्नीवन्तमुत्सृजन्ती'ति** वाक्यात्। **तथा च यत्र पशोर्विशसनं हृदयाद्यवदानं च भवति तत्र हृदयादिप्रकृतिरेव पशुरिति सिद्धम्।**

तृतीयाविभक्तिरूपाया **विनियोक्त्र्या** उदाहरणान्तरमाह—आरुण्यस्यापीत्यादिना। **'अरुणया पिङ्गाक्ष्या एकहायन्या सोमं क्रीणाती'ति ज्योतिष्टोमप्रकरणे श्रुतस्यारुणिमगुणस्येत्यर्थः। क्वचित्पुस्तके मूलग्रन्थ एवेदं वाक्यमुदाहृतम्। अत्रारुणशब्दोऽरुणिमानं गुणमाचष्टे, तस्य गुणिविषयतया प्रयुक्तस्यापि 'नागृहीतविशेषणा विशिष्टबुद्धि'रिति न्यायेन गुणबोधकत्वादन्वयव्यतिरेकसिद्धगुणमात्रव्युत्पत्तिकत्वाच्च। पिङ्गाक्षीशब्दस्तु पिङ्गलवर्णविशिष्टाक्षिमद्द्रव्यवाचको भवति। एकहायनीशब्दश्चैकसंवत्सरविशिष्टगोद्रव्यवाचकः। तौ च शब्दौ यद्यप्येकगोवाचकौ भवतस्तथापि विशेषणभूतधर्मभेदाच्छब्दद्वयमुपपद्यते, तच्च युगपत्प्रवृत्तं सद्धर्मद्वयविशिष्टं गोद्रव्यं क्रयसाधनत्वेन विधत्ते। अरुणशब्दस्त्वरुणिमगुणस्य कारकाणां क्रियान्वयनियमेन सोमक्रयणान्वयेऽपि साक्षात्तत्साधनत्वेनामूर्तमरुणिमानं गुणं न विदधाति, अमूर्तस्य साक्षात्तत्साधनत्वासंभवात्, किंतु सोमक्रयणसाधनीभूतगोद्रव्यपरिच्छेदकत्वेन** तत्साधनम्। **तथा च परस्परमनन्वितानामेवारुण्यपिङ्गाक्षीत्वादीनां कारकाणां क्रियान्वयनियमात्करणविभक्तिभिः सोमक्रयणेऽङ्गत्वेनान्वये सत्यारुण्यादेश्च गुणत्वेनामूर्तस्य स्वतः सोमक्रयणसाधनत्वायोगात्तत्साधनगोद्रव्यपरिच्छेदकत्वेन पश्चात्परस्परं पार्ष्णिकान्वयो भवति एकहायनी गौः, सा पिङ्गाक्ष्यरुणा** चेत्याशयवानाह—तदपीति। **क्रयाङ्गत्वमपीत्यर्थः।**

द्वितीयारूपां विनियोक्त्रीं श्रुतिमुदाहरति—व्रीहीन्प्रोक्षतीति तच्चेति। **प्रोक्षणस्य व्रीह्यङ्गत्वं चेत्यर्थः। तच्चेत्यस्यापूर्वसाधनत्वप्रयुक्तमित्यनेनान्वयः। प्रोक्षणं व्रीहिस्वरूपार्थमेव स्यादिति कुतस्तस्यापूर्वप्रयुक्तं व्रीह्यङ्गत्वमित्यत आह**—प्रोक्षणं नेति। **प्रोक्षणस्य व्रीहिस्वरूपार्थत्वाभावे हेतुमाह**—तस्येत्यादिना। **तस्य व्रीहिस्वरूपस्य। तेन विना प्रोक्षणेन विनेत्यर्थः।** ननु **यागानुष्ठानेनैवापूर्वसिद्धौ किं प्रोक्षणेन व्रीहिस्वरूपानुपयोगिनेत्यत आह**—व्रीहीनप्रोक्ष्येति। **अनुपनीतानुष्ठितवेदाध्ययनस्यापूर्वाजनकत्ववद् व्रीहीणां प्रोक्षणं न कृत्वा तैरनुष्ठितस्य यागस्यापूर्वजनकत्वानुपपत्तेरित्यर्थः। प्रोक्षणे सिद्धमपूर्वप्रयुक्तं व्रीह्यङ्गत्वमन्यत्रातिदिशति**—एवमित्यादिना। **एवं दर्शपूर्णमासप्रकरणसहकृतया द्वितीयाश्रुत्या**

प्रोक्षणस्य तण्डुलनिष्पत्तिप्रणालिकया व्रीहीणामपूर्वसाधनत्वप्रयुक्ताङ्गत्ववत्सर्वेषामङ्गानामवघातादीनां तत्तत्प्रमाणवशादपूर्वसाधनत्वप्रयुक्तमेवाङ्गत्वमित्यर्थः ।

द्वितीयारूपाया विनियोक्त्र्याः श्रुतेरुदाहरणान्तरमाह—एवमित्यादिना । एवम्, द्वितीयाश्रुत्या प्रोक्षणस्य व्रीह्यङ्गत्वादित्यर्थः । ऋतस्येति । सत्यफलस्येत्यर्थः । तथा च सत्यफलसंबन्धिनीं रशनामिमां गृहीतवन्त इति मन्त्रार्थः । अश्वाभिधान्यङ्गत्वमिति । अश्वाभिधान्या अश्वरशनाया अङ्गत्वमित्यर्थः । केचित्तु वाक्यीयमिमं विनियोगमाहुः । अन्ये तु वाक्याल्लिङ्गस्य बलीयस्त्वेन यावद्वाक्यादश्वाभिधान्यङ्गत्वं भवति तावद्रशनामात्राङ्गत्वमेव स्यादिति तत्र दूषणमाहुः । वाक्यविनियोगवादिनस्तु मन्त्रस्य न रशनामात्रप्रकाशकत्वं किंतु ऋतस्य सत्यफलसाधनभूतस्याश्वस्येमां रशनां गृहीतवन्त इत्यश्वरशनाप्रकाशकत्वमेवेति लिङ्गसहकृतादश्वाभिधानीमादत्त इति वाक्यान्मन्त्रस्याश्वरशनादाने विनियोग इति स्वाशयमाहुः । रशनाविशेषस्य न लिङ्गमिति मूलग्रन्थतात्पर्यम् ।

सप्तमीविभक्तिरूपां विनियोक्त्रीं श्रुतिमुदाहरति—यदाहवनीय इति । एवमन्योऽपीति । 'दध्ना जुहोति, पयसा जुहोती'त्यादौ होमानुवादेन दध्यादेस्तदङ्गत्वेन तृतीयाविभक्तिश्रुत्या विनियोग इत्यर्थः ।

एकाभिधानरूपामेकपदरूपां च विनियोक्त्रीं श्रुतिमुदाहरति—पशुना यजेतेतीति । पशुनेत्यत्रैकपदश्रुत्या ह्येकत्वपुंस्त्वयोः पशुद्रव्याङ्गत्वमेकाभिधानश्रुत्या च कारकाङ्गत्वं च भवति । यजेतेत्यत्राप्याख्याताभिहितसङ्ख्याया एकाभिधानश्रुत्या भावनाङ्गत्वमेकपदश्रुत्या च यागाङ्गत्वं च भवतीति भावः । यजेतेत्यभिहितसङ्ख्यायाः समानाभिधानश्रुतेरेव भावनाङ्गत्वमिति संबन्धः । समानाभिधानश्रुतेरेवेति । एकशब्दरूपप्रत्ययश्रुतेरेवेत्यर्थः । अभिधीयतेऽनेनेति व्युत्पत्त्याभिधानशब्देन शब्द उच्यते । पदश्रुत्या चेति । यजेतेत्येकपदश्रुत्या चेत्यर्थः ।

अत्रेदं बोध्यम्—यथा 'दशापवित्रेण ग्रहं संमार्ष्टी'त्यत्रैकत्वमुद्देश्यगतत्वेनाविवक्षितं तथा प्रकृते नोद्देश्यगतमेकत्वं किंतु विधेयगतत्वेन विवक्षितमेव । न च ग्रहं संमार्ष्टीत्यत्र नोद्देश्यगतमेकत्वं किंतु स्वयं विधेयमिति वाच्यम् । 'ग्रहं संमृज्यात्तं संमृज्यात्तैश्चैक'मिति वाक्यभेदप्रसङ्गात् । तथा च ग्रहमिति द्वितीयया ग्रहस्येप्सिततमत्वेनोद्देश्यत्वात्प्रयोजनत्वाच्च प्राधान्यं गम्यते । संमार्गस्तु ग्रहं प्रति गुणभूत एव । ततश्च 'प्रतिप्रधानं गुण आवर्तनीय' इति न्यायाद्यावन्तो ग्रहास्तावतां सर्वेषां संमार्ग इति निश्चये सति कति ग्रहाः संमार्जनीया इति बुभुत्साया अभावादुद्देश्यगतमेकत्वं श्रूयमाणमपि न विवक्ष्यते । यस्य च विशेषणस्यविवक्षामन्तरेणोद्देश्यप्रत्ययो न पर्यवस्यति तादृशं विशेषणमुद्देश्यगतमपि विवक्ष्यत एव, यथा तत्रैव ग्रहत्वं तद्विवक्षामन्तरेण चोद्देश्यस्वरूपं ज्ञातुमशक्यमेव उद्देश्यतावच्छेदकनिर्णयमन्तरेण चमसेष्वपि संमार्गप्रसङ्गात् । तेन च तत्र तद्वारणं फलम् । 'पशुना यजेते'त्यत्र तु यागं प्रति पशोर्विधेयत्वेन गुणभूतत्वात् 'प्रतिप्रधानं गुण आवर्तनीय' इति न्यायप्रवेशो नास्ति । यागस्य च प्रधानत्वादिति । कियता पशुना यागः कर्तव्य इति बुभुत्सायाः सत्त्वादेकवचनेन प्रतीयमानं विधेयगतमेकत्वं विवक्षितमेव । किंच लिङ्गसंख्याविशेषितस्यैकपदोपात्तस्य पशुद्रव्यरूपकारस्य विधेयपशुद्वारा तत्तल्लिङ्गसंख्यादेरपि क्रियाङ्गत्वादेकत्वादिकं विवक्षितम् ।

किंच तृतीयया विभक्त्याऽभिहितयोर्लिङ्गसंख्ययोर्विभक्त्यभिहिततया करणकारकशक्त्यात्मसात्कृतयोः प्रातिपदिकार्थपशुद्रव्येण सह संबन्धमनादृत्य पशुवदेव साक्षाद्यागक्रियाङ्गत्वेन विधौ पश्चादरुणैकहायनीन्यायेन वा परस्परमन्वयोऽपि भवति—यो यागाङ्गत्वेन विहितः पशुः पुमांश्चेति। तस्मात् सर्वथा पश्वेकत्वादिकं विवक्षितमेवेति।

ननु संख्याया न यागाङ्गत्वं भावनाङ्गत्वं च भवति, गुणत्वेनामूर्तत्वात्। न ह्यमूर्तस्य रूपादेः कुत्रचिदङ्गत्वं दृश्यते, व्रीह्यादिद्रव्यस्यैव मूर्तभूतस्य ह्यङ्गत्वमित्याशङ्क्य परिहरति—न चेत्यादिना। भावनाया यागस्याप्युपलक्षणत्वम्। न चेति प्रतिषेधे हेतुमाह—कर्त्रिति। कर्तुरर्थभावनारूपव्यापारवतो यागकर्तुः परिच्छेदद्वारा संख्याया भावनाद्यङ्गत्वोपपत्तेरित्यर्थः। नन्वेवं समानाभिधानश्रुत्या साक्षादेव कर्तरि संख्याख्यातार्थभूतान्वये तु तस्यैवाख्यातार्थत्वात्, भावना तु कर्तृव्यापारभूता धातुनापि लभ्यते। यथा चोक्तम—'फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः' इति। फलं विक्लित्त्यादि व्यापारस्तु भावनाभिधस्तत्र धातुः स्मृतः। आश्रये तु फलाश्रये कर्मणि व्यापाराश्रये कर्तरि च तिङः स्मृता इति वैयाकरणवृद्धवचनपदार्थः। न च कर्तुराख्यातवाच्यत्वमप्रामाणिकमिति वाच्यम्। 'लः कर्मणि च भावे चाकर्मकेभ्यः' (३।४।६९) इति मुनिप्रणीतसूत्रस्यैव चकारात् 'कर्तरि कृत्' इति सूत्रोक्तकर्तरीत्यनुकर्षणेन लकाराणां सकर्मकेभ्यो धातुभ्यः कर्मणि कर्तरि चाकर्मकेभ्यश्च भावे कर्तरि च विधायकस्य प्रमाणत्वात्। तस्मात्कर्तर्येव समानाभिधानश्रुत्याख्यातार्थसंख्या संबध्यते, न भावनायामित्याशङ्क्याह—कर्ता चाक्षेपलभ्य इति। आक्षेपोऽनुमानमर्थापत्तिर्वा तादृशाक्षेपेण लभ्योऽनुमेयः कल्प्यो वेत्यर्थः। तथा च भावना साश्रया गुणत्वाद् व्यापारविशेषत्वाच्च संप्रतिपन्नगुणवत्तादृशव्यापारविशेषवच्च। तथा लोके व्यापारविशेषस्य निराश्रयस्यादर्शनाद्भावनारूपो व्यापारविशेषोऽप्यन्यथानुपपद्यमानः स्वाश्रयमाक्षिपतीत्यर्थापत्तिः। न चाचेतनस्यैव कस्यचिदाश्रयस्य लाभ इति वाच्यम्। कृतिशब्दाभिधेयस्य भावनारूपव्यापारविशेषस्याचेतनाश्रयत्वानुपपत्तेः, किंच भावनाक्षिप्ते च कर्तर्याख्यातस्य लक्षणास्वीकारान्न शाब्द्याः संख्याया अशाब्देन कर्त्रान्वयानुपपत्तिः। तस्यापि लक्षणया शाब्दत्वात्। शब्दगम्यत्वस्य हि शाब्दत्वात्। न च कर्तुरेवाख्यातवाच्यत्वेन भावनाया आक्षेपलभ्यत्वं स्यादिति वाक्यम्। कृतिमत एव कर्तृत्वेन कृतेरेव भावनापरनामधेयाया आकृत्यधिकरणन्यायेनाख्यातवाच्यत्वसंभवे तद्वतः कर्तुराख्यातवाच्यत्वकल्पनाया गौरवात्। किंच यस्य हि प्रकारान्तरेणालाभः स एव शब्दस्यार्थो भवति, न तु तदन्यः शब्दवाच्यार्थः; 'अनन्यलभ्यः शब्दार्थ' इति न्यायात्। अत एव न तीरं गङ्गापदार्थः, तस्य लक्षणयैव प्रतिपन्नत्वात्। एवं चोक्तन्यायेन भावनाया आख्यातवाच्यत्वे संप्रतिपन्ने तया च कर्तुराक्षेपेण लाभे पुनरपि तस्याख्यातवाच्यत्वकल्पनं न न्यायविदां शोभते। न च 'लः कर्मणि च भावे चाकर्मकेभ्यः' (३।४।६९) इति मुनिस्मरणबलादेव कर्तुराख्यातवाच्यत्वं न स्वयं कल्पितमिति युक्तम्। वाच्यवाचकभावस्योक्तन्यायसहकृतान्वयव्यतिरेकगम्यत्वेन तस्य मुनिस्मरणाप्रयोज्यत्वात्। तत्र कर्तृकर्मपदयोः कर्तृत्वकर्मत्वपरत्वेन तस्य कृतिकर्मत्वयोर्लकारविधायकत्वसंभवाच्च। किंच नास्य स्मरणस्य कर्तुराख्यातवाच्यत्वे प्रमाणत्वं संभवति 'द्व्येकयोर्द्विवचनैकवचने' (१।४।२२) 'बहुषु बहुवचनम्' (१।४।२१) इत्यनेन सूत्रेण तस्य स्मरणस्यैकवाक्यत्वेन

कर्त्रेकत्व एकवचनात्मको लकारो द्वित्वे द्विवचनात्मको बहुत्वे बहुवचनात्मको लकारो भवेदित्यस्मिन्नेवार्थे प्रमाणत्वात्। न च कर्तुराख्यातानभिधेयत्वे देवदत्तेन पचतीति प्रयोगापत्तिः। अनभिहितयोः कर्तृकरणयोः कर्तृकरणयोस्तृतीयाया एव विहितत्वादिति वाच्यम्। उक्तन्यायेन कर्तुर्भावनयैवाक्षेपात्; तद्गतसंख्यायाश्चाख्यातेनैव प्रतीतेस्तृतीयायाः कर्तृप्रतिपत्त्यर्थत्वतद्गतसंख्याप्रतिपत्त्यर्थत्वयोरसंभवात्। तथाचोक्तं वृद्धैः— 'संख्यायां कारके वा धीर्विभक्त्या हि प्रवर्तते। उभयं चात्र तत्सिद्धं भावनातिङ्विभक्तितः' इति। न च कृतामपि ण्वुल्तृजादीनां कर्तृवाचकत्वं न स्यात्तत्र मानस्य वक्तव्यत्वादिति वाच्यम्। 'कर्तरि कृदि'ति मुनिप्रणीतसूत्रस्यैव तेषां तत्र शक्तिग्राहकत्वात्।

ननु तर्हि 'कर्तरि कृदि'ति सूत्रादेव 'लः कर्मणो'त्यत्र कर्तृपदमनुवर्तते। तथा च तत्र तस्य धर्मिपरत्वेऽत्रापि तत्परता न्याय्या। अत्र धर्मपरतायां तु तत्रापि धर्मपरतैव स्यादिति चेन्न। शब्दाधिकाराश्रयणादनुवर्तितस्य कर्तृपदस्य धर्मपरतायां बाधकाभावात्। न च शब्दाधिकाराश्रयस्य गमकमन्तरेणासंभवात्कृतामिवाख्यातस्यापि कर्तृवाचित्वमेवास्त्विति वाच्यम्। कृतिमत इत्यादिना तत्र गमकस्य दर्शितत्वात्। तथा च कृतिशब्दाभिधेयस्य कर्तृधर्मस्याख्यातवाच्यत्वे सिद्धेऽनुवर्तितस्य कर्तृपदस्य धर्मपरत्वमेव न्याय्यम्। समुच्चयार्थकेन 'लः कर्मणि चे'ति सूत्रस्थचकारेणैव वा कर्तृधर्मस्यैव लाभो भवति, न कर्तृपदानुवृत्तिः कर्तव्या, कल्पनालाघवात् पूर्वोक्तन्यायेन कर्तृधर्मस्य भावनारूपस्याख्यातवाच्यत्वसिद्धेश्चेत्यलमतिविस्तरेण।

तस्माद्भावनेवाख्यातवाच्या न कर्ता तद्वाच्य इत्यभिप्रेत्याह—आख्यातेन हि भावनोच्यत इत्यादिना। **सा कर्तृव्यापाररूपा भावना कर्तारं विनानुपपद्यमाना पूर्वोक्तप्रकारेण कर्तारमाक्षिपतीत्यर्थः।**

विनियोक्त्री विधि के भी तीन विभाग किये गये हैं। विभक्तिरूपा को ही विभक्तिश्रुति कहा गया है। षष्ठी को लेकर सात कारक माने गये हैं जिनमें एकत्व, द्वित्व एवं बहुत्व को व्यक्त करने के लिए सुप्-प्रत्यय लगाये जाते हैं। इनको ही विभक्ति कहते हैं। प्रथमा विभक्ति से गौणता का नहीं, अपितु प्रधानता का बोध होता है। अतः उसको छोड़कर शेष विभक्तियों में से कुछ के द्वारा गौणता-बोध का उदाहरण दिया गया है, और कुछ को उसी प्रकार का समझ लेने का संकेत है। एकाभिधान समानाभिधान का नामान्तर है। विनियोग-विधि के सहकारी प्रमाणों में श्रुति के भेदोपभेदों का रेखाचित्र इस प्रकार दिया जा सकता है—






विभक्तिरूपा विनियोक्त्री श्रुति में तृतीया विभक्ति द्वारा अङ्गता के बोधन के दो उदाहरण दिये गये हैं। प्रथम उदाहरण 'व्रीहिभिर्यजेत' है। व्रीहि धान को कहते हैं। वह एक द्रव्य है। 'व्रीहिभिः' तृतीयाविभक्त्यन्त पद है। करण अर्थात् साधकतम साधन को व्यक्त करने के लिए तृतीया विभक्ति लगाई जाती है। साधन सदा गौण होता है और साध्य सदा प्रधान। अतः तृतीया-विभक्त्यन्त 'व्रीहिभिः' पद से उस धान नामक द्रव्य का बोध होता है जो याग का साधन है और साधन होने से गौण है। यदि 'व्रीहि' शब्द में तृतीयाविभक्ति 'भिस्' न लगी होती तो उसकी साधनता, अङ्गता, गौणता अथवा शेषत्व का ज्ञान होना कठिन था। विभक्ति से अङ्गत्व का ज्ञान होने से यह उदाहरण विभक्तिरूपा का हुआ।

'व्रीहि' स्वयं में याग का अङ्ग नहीं बनता है, अपितु इसका प्रोक्षण करके-पानी के छींटे देकर, अवघातन करके—कूट करके-भूसी पृथक् की जाती है और निकले हुए चावल से पुरोडाश नाम की हवि तैयार की जाती है। यह पुरोडाश ही साक्षात् रूप से होम में प्रयुक्त होता है। अतः व्रीहि स्वयं याग का साक्षात् अङ्ग न बनकर पुरोडाश के निर्माण की सामग्री के रूप में प्रयुक्त होता है और उसके माध्यम से परम्परया याग या होम का अङ्ग बन पाता है। इस भाव को ही ग्रन्थकार ने 'पुरोडाशप्रकृतितया' आदि शब्दों से कहा है। प्रकृति का अर्थ मूल, आश्रय, घटक, उपादान कारण आदि है। पुरोडाश देवताओं के सामने प्रस्तुत किया जाने वाला चावल का बना हुआ पदार्थविशेष होता है जिसे पिण्ड आदि भी कहा जाता है।[1]

परम्परया अङ्गत्व का एक दूसरा भी उदाहरण ग्रन्थकार ने दिया है—'यथा पशोः' आदि 'पशुना यजेत' एक विनियोगविधि वाक्य है जिसमें पशु से याग करने का निर्देश है। किन्तु याग में सीधे पशु का ही होम नहीं होता, अपितु उसके हृदय आदि अंगों का क्रमशः होम होता है, क्योंकि पशुयाग के लिए यह विधान है कि पहले उसके हृदय को काटे, फिर जीभ को, फिर वक्षस्थल को, फिर भुजाओं को और तब बगलों को—'हृदयस्य अग्रे अवद्यति, अथ जिह्वायाः, अथ वक्षसोऽवद्यति, दोष्णोरवद्यति, पार्श्वयोरवद्यति'' इन अङ्गों की ही हवि प्रदान की जाती है। यहाँ पशु वह मूलस्रोत है जहाँ से ये अवयव प्राप्त होते हैं और होम किये जाते हैं। अतः जिस प्रकार पशु स्वयं में साक्षात् अङ्ग न बनकर अवयवों के हवि के माध्यम से परम्परया याग का अङ्ग सिद्ध होता है, उसी प्रकार 'व्रीहिभिर्यजेत' में व्रीहि स्वयं याग का अङ्ग न बनकर पुरोडाश के घटक के रूप में परम्परया अङ्गता की प्राप्ति करता है। यद्यपि तृतीयाविभक्ति सीधे 'व्रीहि' एवं 'पशु' में ही लगी हैं, अतः उनकी ही अङ्गता होनी चाहिये, तथापि उनके प्रयोग की विधि निर्दिष्ट होने से तदनुसार ही अर्थ लगाना पड़ेगा। जहाँ अवयवों के माध्यम से होमविधान अभीष्ट नहीं है, वहाँ पशु का सीधे प्रयोग होता है और वह स्वयं याग का साक्षात् अङ्ग बनता है—जैसे पात्नीवत-याग में। ग्रन्थकार को वह अभीष्ट नहीं है।

**गुणादि की अङ्गता**—तृतीयाविभक्ति का ही एक और उदाहरण दिया गया है, जिसमें यह बतलाया गया है कि जिस प्रकार व्रीहि अथवा पशु आदि द्रव्य अपनी विकृतियों तथा अवयवों के

---

१. पुरोडाशः पुरः देवतानामग्रे दाश्यते दीयते असौ पुरोदाशः। स एव पुरोडाशः। The Arthasamgraha. p. 113.

माध्यम से परम्परया याग के अङ्ग बनते हैं, उसी प्रकार द्रव्याश्रित अरुणता आदि गुण भी परम्परया विहित क्रिया के अङ्ग बनते हैं, यथा—'अरुणया पिङ्गाक्ष्या०' आदि में। यहाँ ऐसी गाय से ही सोम का क्रय संभव बतलाया गया है जिसका वर्ण लाल हो, जिसकी आँखें पीली हों और जो एक ही वर्ष की आयु की भी हो। यदि उसका वर्ण लाल न हुआ तो, अर्थात् काली या सफेद गाय से सोम को नहीं खरीदा जा सकता। रक्तवर्ण का वाचक 'अरुणया' पद 'गवा' का विशेषण है जो अपने विशेष्य के अनुसार तृतीयाविभक्ति में है। यद्यपि गाय का रक्तवर्ण सोमक्रय में उपयोगी है, तथापि वह स्वयं सोमक्रय में साधन नहीं हो सकता। उसकी उपयोगिता तभी है जब वह गाय से सम्बद्ध हो। अतः गाय के विशेषण के रूप में ही वह क्रय का साधन या अङ्ग हो सकता है, अन्यथा नहीं, क्योंकि यह अमूर्त है।

यद्यपि पूर्व उदाहृत 'व्रीहि' तथा 'पशु' और 'अरुणत्व' में परम्परया अङ्गत्व के साथ अनेक अन्तर हैं--जैसे प्रथम दो का सम्बन्ध याग से है जब कि अरुणत्व का क्रयणरूप क्रिया से, प्रथम दो द्रव्य हैं और तृतीय गुण, प्रथम दो क्रमशः पुरोडाश एवं हृदयादि हविरूप प्रधान अङ्ग की प्रकृति हैं जब कि यह प्रधान अङ्ग गो का विशेषण हैं, तथापि दोनों पक्षों में सबसे बड़ा अन्तर यह है कि प्रथम दोनों मूर्त हैं और यह अमूर्त है। मूर्त का अर्थ है वह पदार्थ जिसका कोई शरीर हो जिसमें परापरत्व, क्रिया, वेग आदि आश्रित रह सकें। ये प्रायः द्रव्य होते हैं। न्याय में पृथ्वी, जल, वायु, तेज तथा मन इनको मूर्त माना गया है। ये नव द्रव्यों में से पाँच है।[1] अरुणत्व 'रूप' नामक एक गुण का भेद हैं जो योग्य द्रव्य के अभाव में अवस्थित नहीं रह सकता। आश्रय के आश्रित होने से यह स्वतन्त्र रूप में किसी क्रिया की निष्पत्ति में सफल नहीं हो सकता। किसी भी क्रिया से सम्बद्ध होने के लिए इसको द्रव्य का आश्रय आवश्यक है। इसी से यहाँ कहा गया है कि अमूर्त होने के कारण अरुणवर्ण क्रयणरूप क्रिया का अङ्ग साक्षात् नहीं हो सकता, अपितु वह गोरूप द्रव्य का परिच्छेदक-व्यावर्तक या विशेषण होकर ही परम्परया सम्बद्ध हो सकता है।[2]

**प्रोक्षण-क्रिया की अङ्गता**—तृतीया श्रुति के द्वारा व्यक्त किया गया है कि कैसे द्रव्य एवं गुण अंग होते हैं। यहाँ क्रिया की अङ्गता का निरूपण है। क्रिया की अङ्गता का उदाहरण सामान्यतः द्वितीया श्रुति से प्राप्त होता है यथा 'व्रीहीन् प्रोक्षति' में। 'व्रीहीन्' द्वितीया बहुवचन का रूप है। द्वितीयान्त 'व्रीहीन्' से प्रकट होता है कि प्रोक्षण अर्थात् जल छिड़कना उससे सम्बद्ध हैं। प्रोक्षण क्रिया है, वह किससे सम्बद्ध है? छिड़काव किस पर होगा। इसके उत्तर में आश्रय या लक्ष्य के रूप में 'व्रीहीन्' ही प्राप्त होता है, अतः प्रोक्षण व्रीहि का अङ्ग हुआ।

प्रोक्षण क्रिया से व्रीहि के स्वरूप में कोई परिवर्तन अपेक्षित नहीं है। जल छिड़कने से धान का कुछ बनता-बिगड़ता नहीं, वह स्वयं में पहले से ही विद्यमान है। छिड़काव इसलिये किया जाता है कि उससे एक अपूर्व सम्पन्न होता है। व्रीहि का प्रोक्षण किये बिना ही उससे याग का अनुष्ठान करने पर अपेक्षित अपूर्व नहीं निष्पन्न हो पाता। इस अपूर्व की निष्पत्ति के लिए ही प्रोक्षण-क्रिया व्रीहि के साथ की जाती हैं, और प्रोक्षण व्रीहि का अङ्ग होता है। इस भाव को मूल में **'तच्च प्रोक्षणं···अपूर्वानुपपत्तेः।'** आदि शब्दों से व्यक्त किया गया है।

जिस प्रकार 'दर्शपूर्णमास' के प्रसङ्ग में प्रोक्षण-क्रिया अपूर्वसम्पादन के लिए ही व्रीहि के अङ्ग के

---

१. क्षितिर्जलं तथा तेजः पवनो मन एव च।
परापरत्व-मूर्तत्व-क्रिया-वेगाश्रया अमी॥ कारिकावली।
तत्र द्रव्याणि पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवैव॥ तर्कसंग्रहः।

२. यद्यपि ( आरुण्यम् ) अमूर्तो गुणः, तथापि हायनवदक्षिवच्च गोद्रव्यमवच्छिनत्ति। तच्च द्रव्यं साधनमिति तद्द्वारा गुणस्य क्रयेण अन्वयो भवति।···गुणस्यैवात्र तृतीयाश्रुत्या साधनत्वमुच्यते। यच्च द्रव्यद्वारमन्तरेण न संभवतीति अर्थापत्त्या द्रव्यावच्छेदकत्वं कल्प्यते। जैमिनिन्यायमालाविस्तर पृ० ११३।

पुरोडाशपात्राङ्गत्वम्, पदार्थयोर्भिन्नदेशस्थत्वेन संबन्धस्याप्रत्यक्षत्वात्, स्थानविनियोगे तु पदार्थयोर्देशसामान्यलक्षणः संबन्धः प्रत्यक्ष एव। न च सा पदार्थयोः संबन्धवाचिका भवति, यौगिकशब्दानां द्रव्यवाचकत्वेन पदार्थसंबन्धावाचकत्वात्, तथात्वे वा तस्याः सा संबन्धमात्रवाचिका तद्विशेषवाचिका वा स्यात्। नाद्यः, तन्मात्रोक्तौ प्रयोजनाभावात्। सर्वेषां यौगिकवचसां पर्यायतापत्तेश्च। द्वितीये तु संबन्धविशेषस्य संबन्धिविशेषनिरूप्यत्वादवश्यं संबन्धिनौ वक्तव्यौ। तथा च संबन्धिप्रतिपत्त्यैव वाक्यार्थप्रतिपत्तिन्यायेन संबन्धप्रतिपत्तिसंभवे तत्रापि शक्तिकल्पने गौरवान्न समाख्यायाः संबन्धवाचित्वम्। तथा चोक्तम् 'सर्वत्र यौगिकैः शब्दैर्द्रव्यमेवाभिधीयते। न च संबन्धवाचित्वं संभवत्यतिगौरवात्'। तथान्यच्च 'पाकं तु पचिरेवाह कर्तारं प्रत्ययोऽप्यकः। पाकयुक्तः पुनः कर्ता वाच्यो नैकस्य कस्यचि'दिति। किंच पौरोडाशिकमिति समाख्यायां प्रकृतिः पुरोडाशमात्रमभिधत्ते, तद्धितप्रत्ययस्तु पुरोडाशस्येदमिति व्युत्पत्त्या काण्डम्। न चैतावता कृत्स्नपुरोडाशपात्राणां मन्त्रसंनिधिः प्रत्यक्षो भवति किंत्वर्थापत्त्या स कल्प्यते। कथम्? शृणु, यद्युक्तः संनिधिर्न स्यात्तदा शुन्धनप्रतिपादकमन्त्रस्य पौरोडाशिकसमाख्या न स्यात्। न ह्याग्न्यसंनिहितानामिषेत्यादिमन्त्राणामाग्नेयकाण्डसमाख्या भवति। भवति च सा संनिहितानां 'युञ्जानः प्रथमं मनः' इत्यादिमन्त्राणाम्। ततश्च काण्डसमाख्यया संनिधिं परिकल्प्य कल्पितकाण्डसंनिध्यन्यथानुपपत्त्या परस्पराकाङ्क्षारूपं कृत्स्नपात्रप्रकरणं कल्पयित्वा तद्द्वारा वाक्यलिङ्गश्रुतीश्च कल्पयित्वा तया श्रुत्या विनियोग इति स्थानापेक्षया विनियोगे समाख्याया विप्रकर्षः। सांनाय्यपात्राणां तु कुम्भीशाखापवित्रादीनां शोधनमन्त्रसंनिधिः प्रत्यक्षो भवति। कथम्? शृणु, इध्माबर्हिःसंपादनस्य मुष्टिनिर्वापस्य चान्तरालं सांनाय्यपात्राणां देश उक्तः शोधनमन्त्रश्चायमिध्माबर्हिर्निर्वापविषययोर्मन्त्रानुवाकयोर्मध्यमेऽनुवाके पठ्यते। तेन च प्रत्यक्षसंनिधिना प्रकरणादीनां चतुर्णामेव कल्पनात्संनिधिः समाख्यापेक्षया संनिकृष्यते। तस्मात्क्रमेण समाख्यां बाधित्वा सांनाय्यपात्राणां शोधने शेषोऽयं मन्त्रो भवतीत्यभिप्रेत्याह—अत एवेत्यादिना। अत एव स्थानस्य समाख्यातः प्रबलत्वादेव। शुन्धनमन्त्रः 'शुन्धध्वं दैव्याय कर्मण' इति मन्त्रः। सांनाय्यपात्राङ्गमिति सांनाय्ययागयोरैन्द्रदध्यैन्द्रपयसोः पात्राणां कुम्भीशाखापवित्रादीनामङ्गमित्यर्थः। पाठसादेश्यादिति। संनिधिपाठादित्यर्थः। पुरोडाशपात्राङ्गमिति। पुरोडाशपात्राणामुलूखलादीनामङ्गमित्यर्थः।

यौगिक शब्द को समाख्या कहते हैं। इसमें अर्थ प्रकृतिप्रत्यय विभाग करके लिया जाता है। 'शुन्धध्वं दैव्याय कर्मणे' इत्यादि मन्त्र शुन्धनमन्त्र कहा जाता हैं। दही और दूध का नाम सांनाय्य है। उससे सम्बद्ध पात्रों को सांनाय्यपात्र कहते हैं। पुरोडाश चावल को पीसकर दूध में गर्म करके बनाया गया पिण्ड है। पुरोडाश में ठक् प्रत्यय लगाकर 'पुरोडाशस्येदम्' अर्थ में 'पौरोडाशिक' शब्द बनाया जाता है। इस प्रकार का अर्थ लेने पर 'पौरोडाशिक-काण्ड' में पठित क्रियाएँ पुरोडाश या उससे सम्बद्ध पात्रों तक ही सीमित हो जाती हैं, अन्यत्र उनका योग नहीं हो पाता। किन्तु कुछ स्थल हैं जहाँ इस नियम का भङ्ग होता है। इसका कारण इसके विपक्षी का प्रबल पड़ना हैं। उदाहरणार्थ यह प्रसङ्ग उपस्थित है।

दर्शपौर्णमासकाण्ड के अन्तर्गत एक पौरोडाशिक काण्ड भी है जहाँ पुरोडाश के उपयोगी विधि पठित हैं। 'पुरोडाशस्येदम्' या 'पुरोडाशमर्हति इति पौरोडाशिकम्' इस व्युत्पत्ति के अनुसार उस काण्ड में उक्त पात्रों, कर्मों और मन्त्रों की पुरोडाशोपयोगिता प्रतीत होती है। इस प्रकार

'शुन्धध्वं' आदि मन्त्र को भी उसी काण्ड में पठित होने से तत्काण्डपठित पुरोडाश के पात्र उलूखल, दृषदुपल ( सिलबट्टा ), जुहू आदि के शोधन के लिये समझा जाना चाहिये। उसी काण्ड में आदि में इध्माबर्हिःसम्पादन ( समिधा, कुश आदि की योजना ), उसके बाद सान्नाय्यपात्र और उसके बाद मुष्टिनिर्वाप—इन तीनों पदार्थों का क्रमशः अभिधान है। वहीं मन्त्रों में भी इध्माबर्हिःसम्पादन से सम्बद्ध अनुवाक, फिर 'शुन्धध्वं०' आदि मन्त्र का पाठ, और उसके भी बाद मुष्टिनिर्वापविषयक अनुवाक क्रमशः अभिहित हैं। अतः यथासंख्यक्रमरूप पाठसादेश्य से सान्नाय्यपात्रों का शुन्धन सिद्ध होता है।[1] इसके अतिरिक्त सांनाय्यपात्रों के साथ ही शुन्धनमन्त्र का पाठ होने से सन्निधिपाठसादेश्य भी है। यदि समाख्या से अर्थ ग्रहण किया जाये तो शुन्धन मन्त्र का प्रयोग पुरोडाश से सम्बद्ध उलूखल, मुसल, कृष्णाजिन, दृषदुपल आदि के अङ्ग के रूप में होगा और स्थान प्रमाण से ग्रहण करने पर सांनाय्य से सम्बद्ध कुम्भी, शाखापवित्र, अपिधानी, दोहनपात्र आदि के अङ्गरूप में।

सिद्धान्त यह है कि स्थानप्रमाण से ही इस प्रसङ्ग में शुन्धनमन्त्र सांनाय्यपात्रों का अङ्ग है न कि पौरोडाशिक पात्रों का। यह 'स्थान' के 'समाख्या' से प्रबल होने के कारण ही है। प्रबलता का आधार क्रियानिष्पत्ति में निकटता है। अर्थात् स्थानप्रमाण से शुन्धनमन्त्र का विनियोग करने पर 'स्थान' एवं विनियोग में बीच के प्रकरण, वाक्य, लिङ्ग और श्रुति केवल चार व्यापारो का ही व्यवधान होता है जब कि समाख्या से विनियोग मानने पर स्थान, प्रकरण, वाक्य, लिङ्ग और श्रुति—इन पाँच व्यापारों का व्यवधान हो जाता है। अतः प्रथम का आश्रय लेने पर विनियोग में निकटता है और समाख्या के आश्रयण पर विप्रकृष्टता।

दर्शपूर्णमास में सम्पाद्य कर्मों का विस्तृत रेखाचित्र इस प्रकार है।




## समाख्यानिरूपणम्

**( ३३ ) समाख्या यौगिकः शब्दः। सा च द्विविधा—वैदिकी लौकिकी च। तत्र होतुश्चमसभक्षणाङ्गत्वम्, होतृचमस इति वैदिक्या समाख्यया। अध्वर्योस्तत्तत्पदार्थाङ्गत्वम्, लौकिक्या आध्वर्यवमिति समाख्ययेति संक्षेपः। तदेवं निरूपितानि संक्षेपतः श्रुत्यादीनि षट् प्रमाणानि।**

यौगिक शब्द समाख्या है। वह समाख्या दो प्रकार की है—वैदिकी और लौकिकी। इन ( दोनों ) में होता की चमसभक्षण की अंगता 'होतृचमस' इस वैदिकसमाख्या से सिद्ध होती है। अध्वर्यु की तत्तत्पदार्थों की अङ्गता 'आध्वर्यवम्' इस लौकिक समाख्या से होती है। ( यही समाख्या का ) संक्षेप है। इस प्रकार से श्रुति आदि छः प्रमाण संक्षेप में निरूपित हुए।

१. प्रतिपादिका पृ० ६९.

**एवं स्थानं निरूप्य समाख्यां लक्षयति—**समाख्या यौगिकः शब्द इति । **अत्र यौगिकशब्दत्वं लक्षणम्, समाख्येति लक्ष्यम् । शब्दश्चतुर्धा यौगिको रूढो योगरूढो यौगिकरूढश्चेति । तत्राध्वर्यवं पाचक इत्यादिर्यौगिकः स एव समाख्येति चोच्यते । यत्रावयवार्थ एव ज्ञायते स यौगिक इति तन्निर्वचनम् । योऽवयवशक्तिनिरपेक्षया समुदायशक्त्यैवार्थं बोधयति स रूढः, यथा गवादिशब्दः । यस्त्ववयवशक्तिविषये समुदायशक्त्यापि प्रवर्तते स योगरूढः । यथा पङ्कजादिशब्दस्यैवावयवशक्त्या पङ्कजनिकर्तृत्वेन समुदायशक्त्या च पद्मत्वेन रूपेण पद्मबोधकत्वात् । यस्त्ववयवशक्तिसमुदायशक्तिभ्यां रूढार्थं यौगिकार्थं च स्वातन्त्र्येण बोधयति स यौगिकरूढः यथोद्भिदादिशब्दः । स चोर्ध्वभेदनकर्तृतरुगुल्मादिकं बोधयति यागविशेषमपि चेति । सा यौगिकशब्दात्मिका समाख्या । तत्र, तयोः समाख्ययोर्मध्य इत्यर्थः ।** होतुरिति । **भक्षणस्य क्रियात्मकत्वेन प्राधान्यात्तत्कर्तुर्होतुर्भवति तदङ्गत्वमित्यर्थः ।** तत्तत्पदार्थाङ्गत्वमिति । **'पुरोऽध्वर्युर्विभजती'त्यादिना यजुर्वेदेन विहितानां पदार्थानामङ्गत्वमित्यर्थः ।** लौकिक्येति । **याज्ञिकैः परिकल्पितयेत्यर्थः । तृतीये स्थितं 'प्रैतु होतुश्चमस' इत्यत्र समाख्या भक्षहेतुः 'हरिरसि हारियोजन' इत्यनेन मन्त्रेण गृह्यमाणो ग्रहो हारियोजनः । तत्र वाक्यं 'वषट्कर्तुः प्रथमभक्ष' इत्यत्र वषट्कार इत्येवमुक्तत्वात् त्रय एव भक्षहेतव इति प्राप्ते राद्धान्तः—हविर्धाने ग्रावभिरभिषुत्याहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षान्भक्षयन्तीति श्रूयते । उत्तरवेद्याः प्रतीचीने सदसः प्राचीने मण्डपेऽभिषवः, उत्तरवेद्यां होमः, सदसि भक्षणं, तत्राभिषवहोमयोर्वचनान्तरप्राप्तयोरविधेयतया तयोर्निमित्तत्वेनापूर्वभक्षणं विधीयते । तस्मात्स्थानादिवदेतयोरपि भक्षणहेतुत्वमस्तीत्यभिप्रेत्याह—**संक्षेप इति । **श्रुत्यादिप्रमाणस्य विनियोगविधिसहकारिणो निरूपणमुपसंहरति—**तदेवमिति ।

यौगिक शब्द को यहाँ समाख्या नामक प्रमाण कहा गया है। शब्द एवं प्रत्यय इन दोनों के सम्मिलित अर्थ का बोध जिस शब्द से होता है वह यौगिक कहा जाता है। जैसे 'पाचक' शब्द यौगिक है क्योंकि इससे 'पचि' धातु का 'पाचनकर्म' और ण्वुल् प्रत्यय का 'करने वाला' दोनों अर्थ एक साथ अभीष्ट है और वही ज्ञात भी होता है। जहाँ अवयवों के वाच्य अर्थ की अपेक्षा नहीं होती अपितु पूरा पद ही किसी अर्थ का बोधक होता है उसे रूढ़ शब्द कहते हैं, जैसे 'गौ' आदि। इसका अर्थ सीधे एक पशुविशेष ले लिया जाता है, 'गम्' धातु आदि अवयवों का अर्थ अभीष्ट नहीं होता।

जिस शब्द का वैदिक साहित्य में ही प्रयोग होता है तथा उसका अवयवार्थ अभीष्ट होता है, उसे वैदिकी समाख्या कहते हैं। जैसे 'होतुश्चमस'। यद्यपि भास्कर ने 'होतृचमस' शब्द दिया है, किन्तु वैदिक मन्त्र "प्रैतु होतुश्चमस" आदि में पद समस्त न होकर व्यस्त है। 'होता' ऋग्वेद के पाठक को कहते हैं। 'चमस' का अर्थ है 'चमचा', किन्तु लक्षणा से इसका अर्थ होता है 'चमस में रखे हुए सोमरस का भक्षण'। इस प्रकार 'होतृचमस' में 'होता' 'चमसभक्षण' रूप क्रिया का अङ्ग समाख्या से सिद्ध होता है। मीमांसाशास्त्र में क्रिया की प्रधानता होने से भक्षणक्रिया अङ्गी है और द्रव्यरूप 'होता' उसका अङ्ग। वेदों में ही प्रयुक्त होने वाले उक्त प्रकार के शब्दों में वैदिकी-समाख्या होती है, अन्यों में नहीं।

'आध्वर्यवम्' में लौकिकी समाख्या है क्योंकि इसका प्रयोग वेदों में ही नहीं है। इसका निर्माण 'अध्वर्यु' शब्द में तद्धितप्रत्यय लगाकर वैदिकों ने किया है। अध्वर्यु यजुर्वेद के पाठी को कहते हैं, अतः उससे सम्बद्ध या उसके समस्त मन्त्रों के पाठ की क्रिया अथवा उससे बोधित पदार्थों का वह अध्वर्यु अङ्ग होता है। इसी प्रकार होता ऋग्वेद के पदार्थों का, उद्गाता सामवेद का और

ब्रह्मा अथर्ववेद का । मूल में प्रयुक्त 'तत्तत्पदार्थाङ्गत्वं' का अर्थ है 'यजुर्वेदविहित कर्मों का अनुष्ठाता होने से अङ्ग सिद्ध होना' ।

समाख्या विनियोगविधि के सहकारी षट्प्रमाणों में अन्तिम है, अतः उसका निरूपण समाप्त होने से सबका निरूपण पूर्ण समझना चाहिये ।

## विनियोगविधिबोधिताङ्गानि

**( ३४ ) एतत्सहकृतेन विनियोगविधिना समिदादिभिरुपकृत्य 'दर्शपूर्णमासाभ्यां यजेते'त्येवंरूपेण यानि विनियोज्यन्ते तान्यङ्गानि द्विविधानि सिद्धरूपाणि क्रियारूपाणि चेति । तत्र सिद्धानि जातिद्रव्यसंख्यादीनि । यानि च दृष्टार्थान्येव । क्रियारूपाणि च द्विविधानि—गुणकर्माणि प्रधानकर्माणि च । एतान्येव संनिपत्योपकारकाणि आरादुपकारकाणीति चोच्यन्ते ।**

इनसे सहायताप्राप्त विनियोगविधि के द्वारा समिद् आदि से उपकृत होकर 'दर्शपूर्णमासाभ्यां यजेत' इस प्रकार ( के मन्त्रों ) से जिनका विनियोग होता है वे अङ्ग दो प्रकार के होते हैं—सिद्धरूप तथा क्रियारूप । इनमें सिद्धरूप हैं जाति, द्रव्य, संख्या आदि और ये दृष्टप्रयोजन वाले हैं । क्रियारूप दो प्रकार के हैं—गुणकर्म तथा प्रधानकर्म, यही संनिपत्योपकारक तथा आरादुपकारक भी कहे जाते हैं ।

**एतैः षड्भिः प्रमाणैः सहकृतेन विनियोगविधिना यान्यङ्गानि विनियोज्यन्ते तानि विनियोगविधेः स्वरूपमनुवदन्विभजते**—एतदित्यादिना । **तत्र सिद्धरूपाणि निर्दिशति**—तत्रेति । **सिद्धरूपक्रियारूपाणां मध्य इत्यर्थः । जातिः पशुत्वादिः, द्रव्यं व्रीह्यादि, संख्या एकत्वादिः, तेषां यागस्वरूपोपकारकत्वेन दृष्टार्थत्वमेवेत्याह**—तानि चेति । **क्रियारूपाणां विभागद्वारा लक्षणमाह**—क्रियारूपाणीत्यादिना । **गुणस्य कर्माङ्गस्य द्रव्यादेः संस्कारकराणि क्रियाविशेषरूपाणि गुणकर्माणि यथाऽवघातादीनि । प्रधानस्य फलापूर्वस्योपकारकाणि तानि प्रधानकर्माणि यथा प्रयाजादीनि । तेषामेव लक्षणमाह**—एतान्येवेत्यादिना ।

दर्शपूर्णमास आदि प्रधानयाग हैं, समिद् आदि सहायक याग हैं, जिनकी प्राप्ति 'समिधो यजति' आदि मन्त्रों से होती है । इनकी प्रधानता तथा अङ्गता का ज्ञान विनियोगविधि से होता है । श्रुति आदि षट्प्रमाण सहायक कर्मों के निर्धारण में उपयोगी होते हैं । यही भाव 'एतत्सहकृतेन' आदि वाक्यों में स्पष्ट किया गया है ।

ये अङ्ग दो प्रकार के होते हैं । एक वे हैं जिनको उत्पन्न करने में कर्त्ता का प्रयास सहायक नहीं होता, वे स्वतः उत्पन्न होते हैं । इनको सिद्धरूप कहते हैं अर्थात् इनका स्वरूप पहले से निश्चित होता है, कर्त्ता उनको उत्पन्न नहीं करता । इस प्रकार की अङ्गसामग्री है जाति, द्रव्य, संख्या आदि । पशुत्व, ब्राह्मणत्व आदि जाति है, व्रीहि आदि द्रव्य है, एकत्व आदि संख्या है । कर्त्ता न तो ब्राह्मणत्व को उत्पन्न करता है न व्रीहि को और न एकत्व आदि संख्या को । ये पूर्वतः प्राप्त होते हैं जिनका उपयोग वह करता है । ये वस्तुयें याग में सहायक होती हैं । 'वसन्ते **ब्राह्मणोऽग्नि**मादधीत' सदृश वाक्यों में ब्राह्मणत्वजाति, '**व्रीहिभिर्य**जेत' में व्रीहि द्रव्य, 'आग्नेयोऽष्टाकपालः' में अष्टत्वसंख्या आदि स्पष्टतः याग के उपकारक अङ्ग परिलक्षित होते हैं । मूल में प्रयुक्त 'जातिद्रव्यसंख्यादीनि' में 'आदीनि' से देवता और गुण का ग्रहण होता है ।[1]

१. आदिना देवतापरिग्रहः । श्वेतमालभेतेत्यादिगुणपरिग्रहश्च । प्रतिपादिका पृ० ७४

दूसरे प्रकार के अङ्गकर्म क्रियारूप होते हैं। इस प्रकार के अङ्ग कर्त्ता के प्रयत्न से साध्य होते हैं।[1] इनके दो भेद आगे विस्तृत रूप से वर्णित होंगे।

सिद्धरूप अङ्ग दृष्टार्थ होते हैं अर्थात् इनकी सहायता से याग का स्वरूप निष्पन्न होता है अतः इनके द्वारा किया गया परिष्कार या उपकार प्रत्यक्ष होता है। इनके अभाव में याग का स्वरूप निष्पन्न नहीं होता, अतः उनका प्रयोजन दृष्ट ही होता है, उनको अनुमान से जानने की जरूरत नहीं होती। मूल में 'दृष्टार्थान्येव' में 'एव' का यही अर्थ है। क्रियारूप अङ्ग अदृष्टार्थ आदि भी हो सकते हैं, किन्तु ये तो दृष्टार्थ ही होते हैं।

## संनिपत्योपकारकाणि

**(३५) कर्माङ्गद्रव्याद्युद्देशेन विधीयमानं कर्म संनिपत्योपकारकम्। यथाऽवघातप्रोक्षणादि। तच्च दृष्टार्थम् अदृष्टार्थम् दृष्टादृष्टार्थं चेति। तत्र दृष्टार्थमवघातादि, अदृष्टार्थं प्रोक्षणादि, दृष्टादृष्टार्थं पशुपुरोडाशादि। तद्धि द्रव्यत्यागांशेनैव अदृष्टं देवतोद्देशेन च देवतास्मरणं दृष्टं करोति।**

होमकर्म के अङ्गभूत द्रव्य आदि को लक्ष्य करके सम्पन्न किये जाने वाले कर्म संनिपत्योपकारक हैं। जैसे अवघात, प्रोक्षण आदि। यह कर्म दृष्टार्थ, अदृष्टार्थ और दृष्टादृष्टार्थ है। इनमें अवघात आदि दृष्टार्थ है, प्रोक्षण आदि अदृष्टार्थ और पशु-पुरोडाश आदि दृष्टादृष्टार्थ है। यह (पशुपुरोडाश आदि) द्रव्यत्याग अंश में ही अदृष्ट (अर्थ करता) है, देवता को लक्ष्य करने से देवतास्मरण रूप दृष्ट प्रयोजन को सम्पन्न करता है।

**संनिपत्योपकारकाणां लक्षणमाह—**कर्माङ्गेत्यादिना। **यानि चाङ्गानि साक्षात्परम्परया वा विहितफलसाधनयागशरीरं निष्पाद्य तद्द्वारा तदुत्पत्त्यपूर्वोपयोगीनि तानि संनिपत्योपकारकाणीति फलितम्। द्रव्यादीत्यादिना देवतादिपरिग्रहः। क्रियारूपत्वं सर्वेषां कर्मणां गुणकर्मत्वमवघातादीनां प्रधानकर्मत्वं प्रयाजादीनां संनिपत्योपकारकत्वं अवघातादीनामारादुपकारकत्वं प्रयाजादीनां च लक्षणमिति समुदायतात्पर्यम्। तत्रोदाहरणमाह—**यथावघातेति। **संनिपत्योपकारकाणां पुनरपि त्रिविधं विभागं करोति—**तच्चेत्यादिना। **तच्च संनिपत्योपकारकं चेत्यर्थः। दृष्टार्थमुदाहरति—**दृष्टार्थमवघातादीनि। **अवघातादेस्तुषविमोकादिरूपदृष्टद्वारा यागस्वरूपतदुत्पत्त्यपूर्वहेतुत्वात्संभवति तस्य दृष्टार्थत्वमित्यर्थः। अदृष्टार्थमुदाहरति—**अदृष्टार्थमिति। **प्रोक्षणादेर्व्रीहिगतसंस्काररूपातिशयादृष्टद्वारा प्रधानयागोत्पत्त्यपूर्वहेतुत्वात्संभवति केवलादृष्टार्थत्वं प्रोक्षणमन्तरेणापि यागस्वरूपानुपपत्त्यभावात् दृष्टोपकारासंभवात्। दृष्टादृष्टोभयार्थमुदाहरति—**दृष्टादृष्टार्थमिति। **पशुपुरोडाशादीत्यादिना यागादिसंग्रहः।** तद्धि **पशुपुरोडाशादि इत्यर्थः।** अदृष्टमिति। **यागोत्पत्त्यपूर्वद्वारा फलापूर्वमित्यर्थः।**

याग के अङ्गभूत द्रव्य आदि से सम्बद्ध कर्म गुणकर्म कहे गये हैं। प्रधानकर्म प्रधानयाग के अङ्गभूत कर्म हैं। गुणकर्म को ही संनिपत्योपकारक कहते हैं। 'सन्निपत्य' का अर्थ हैं द्रव्य आदि के माध्यम से, न कि साक्षात्, याग के स्वरूप का घटक होना, और 'उपकारक' का अर्थ है यागजन्य अपूर्व की उत्पत्ति में सहायक होना। पूरे पद का अर्थ हुआ—वे कर्म जो यागादि के अङ्गभूत व्रीहिरूप द्रव्य आदि को संस्कृत करके साक्षात् या परम्परया मुख्ययाग के अपूर्व की निष्पत्ति में सहायक

---

१. क्रियारूपाणि कर्तृप्रयत्नसाध्यरूपाणि। वही.

होते हैं, सन्निपत्योपकारक हैं। उदाहरणार्थ, पुरोडाश के निर्माण में व्रीहि सहायक है। व्रीहि द्रव्य है। भूसी अलग करने के लिए इसे कूटना पड़ेगा। कूटना ही 'अवघात' है। उसे पानी छिड़क कर साफ करना 'प्रोक्षण' है। ये 'अवघात' तथा प्रोक्षण की क्रियाएँ सीधे प्रधानअपूर्व को उत्पन्न नहीं करतीं, अपितु कर्म के अङ्गभूत पुरोडाश के उपयोगी व्रीहि आदि को लक्ष्य करके ये सम्पन्न की गई हैं। अतः इनसे याग के शरीर के अङ्गभूत पुरोडाश या व्रीहि के संस्कार में सहायता मिली। अवघात और प्रोक्षण से उत्पन्न अपूर्व पुरोडाश के अपूर्व से सम्बद्ध होगा और पुरोडाश का अपूर्व प्रधान अपूर्व से सम्बद्ध होगा। 'व्रीहीन् अवहन्ति' 'व्रीहीन् प्रोक्षति' आदि श्रुतियाँ अवघातन और प्रोक्षण का विधान करती हैं। 'यथावघातप्रोक्षणादि' में 'आदि' का अर्थ 'पेषण' और 'मन्त्रग्रहण' है।[1]

**इनकी दृष्टाद्यर्थता**—सन्निपत्योपकारक का त्रिधा विभाजन किया गया है। इनमें कुछ दृष्टार्थ हैं, कुछ अदृष्टार्थ और कुछ दृष्टादृष्टार्थ। जिन क्रियाओं का फल प्रत्यक्ष ही होता है उनको दृष्टार्थ कहते हैं। व्रीहि का अवघात करने पर तुषविमोचन ( भूसी का हटना ) स्पष्ट दृष्टिगोचर होता है। अवघात भूसी अलग करने के लिए ही हुआ था, वह प्रत्यक्ष है, अतः यह क्रिया दृष्टार्थ हुई। 'अवघातादि' में 'आदि' पद 'पेषण' का बोधक है। पिसाई करने से उसकी पुरोडाश निष्पादन में उपयोगिता प्रत्यक्ष ही है।[2] चावल को धोना-प्रोक्षण-अदृष्टार्थ है। इससे व्रीहि आदि का संस्काररूप अलौकिक प्रयोजन ही सिद्ध होता है। प्रोक्षण से व्रीहि में होने वाली संस्कार की अतिशयता से प्रधानयाग से उत्पन्न अपूर्व ही पुष्ट होता है। यह प्रधान अपूर्व अदृष्ट है—प्रत्यक्ष नहीं होता। व्रीहि का प्रोक्षण करने या न करने से याग के स्वरूप पर कोई अन्तर नहीं आता, अतः उसका प्रयोजन दृष्ट नहीं होता। व्रीहि का प्रोक्षण करने से भी पुरोडाश बन सकता है और न करने से भी बन सकता है। अतः उसकी उपयोगिता प्रत्यक्ष नहीं हो पाती, किन्तु 'व्रीहीन् प्रोक्षति' श्रुतिवाक्य निरर्थक न हो इसलिये यह कल्पना की गयी कि प्रोक्षण का फल भले दृष्टिगत न हो, किन्तु उससे एक अपूर्व अवश्य उत्पन्न होगा। इस अपूर्व से परम्परया प्रधानअपूर्व का परिष्कार होगा, इससे उसको बल मिलेगा। यह प्रधानअपूर्व भविष्य में निष्पन्न होगा, अतः वर्तमान में उसका या उसके परिष्कार का प्रत्यक्ष नहीं हो सकता। इसी से प्रोक्षण को अदृष्टार्थ कहा जाता है।

पशु-पुरोडाश आदि दृष्टादृष्टार्थ हैं। पशुपद तथा पुरोडाशपद इनसे सम्पाद्य होम के वाचक हैं।[3] 'आदि' का अर्थ सोमयाग है। पशु-पुरोडाश होम का उतना ही अंश अदृष्टार्थ है जिसका सम्बन्ध अग्नि में हवि डालने से है क्योंकि अग्नि में हविप्रक्षेप से एक अपूर्व पैदा होगा।[4] अपूर्व प्रत्यक्ष का विषय नहीं होता। अतः पशुहोम और पुरोडाशहोम का अग्नि में हविप्रक्षेपरूप क्रिया अदृष्टार्थक है। हविप्रक्षेप के समय 'यह वस्तु इस देवता यो प्राप्त हो' आदि वचन कहने से उस देवता का स्मरण होता है। यह देवस्मरण की अनुभूति सार्वजनीन है, अतः प्रत्यक्ष है। प्रत्यक्ष होने से दृष्टार्थ है। इस प्रकार यह अंशतः दृष्टार्थ तथा अंशतः अदृष्टार्थ होने से 'दृष्टादृष्टार्थ' उभयरूप है।

मूल के वाक्य 'तद्धि' आदि का अन्वय इस प्रकार करना चाहिये—'तद्धि द्रव्यत्यागांशेनैवादृष्टं ( करोति ), देवतोद्देशेन च देवतास्मरणं दृष्टं करोति।'

१. आदिना पेषणादिपरिग्रहो मन्त्रपरिग्रहश्च। प्रतिपादिका पृ० ७५

२. आदिपदात् पेषणपरिग्रहः। वही

३. पशुपदं पशुकरणकहोमपरम्। एवं पुरोडाशपदमपि। आदिना सोमकरणकहोमसंग्रहः। होमश्च देवतोद्देशेनाग्निप्रक्षेपावच्छिन्नद्रव्यत्यागरूपः। वही।

४. द्रव्यत्यागांशेन अग्निप्रक्षेपांशेन।......देवतोद्देशेन अमुकदेवताया इदं भवत्वित्यभिसन्धानेन। दृष्टमिति। देवताया इदं भवत्वित्यभिसन्धाने कृते देवतायाः स्मरणस्य सर्वलोकानुभवसिद्धत्वादिति भावः। वही पृ० ७५.

## आराद्युपकारकाणि

**( ३६ ) द्रव्याद्यनुद्दिश्य केवलं विधीयमानं कर्म आराद्युपकारकम्। यथा प्रयाजादि। आराद्युपकारकं च परमापूर्वोत्पत्तावेवोपयुज्यते। संनिपत्योपकारकं तु द्रव्यदेवतासंस्कारद्वारा यागस्वरूपेऽप्युपयुज्यते। इदमेव चाश्रयि कर्मेत्युच्यते। तदेवं निरूपितः संक्षेपतो विनियोगविधिः।**

द्रव्य आदि को लक्ष्य न करके केवल सम्पाद्यमान कर्म आराद्युपकारक है, जैसे प्रयाज आदि। आराद्युपकारक परम अपूर्व–फलापूर्व–की उत्पत्ति में ही प्रयुक्त होता है, जब कि संनिपत्योपकारक तो द्रव्य, देवता और संस्कार के द्वारा याग के स्वरूप में भी प्रयुक्त होता है। यह ( संनिपत्योपकारक ) ही आश्रयिकर्म भी कहा जाता है। तो इस प्रकार संक्षेप में विनियोग-विधि का निरूपण हुआ।

आराद्युपकारकाणां लक्षणमाह—द्रव्याद्यनुद्दिश्येति। आत्मसमवेतापूर्वजनकान्याराद्युपकारकाणीत्यपि वदन्ति। तत्रोदाहरणमाह—यथेति। प्रयाजादीत्यादिनाज्यभागानुयाजादिपरिग्रहः। अत्र परमापूर्वोत्पत्तावेवेत्येवकारेण द्रव्यदेवतागतसंस्कारजननद्वारा यागस्वरूपोपयोगित्वमाराद्युपकारकाणां निरस्यते। यागस्वरूपेऽपीत्यपिना संनिपत्योपकारकाणां द्रव्यदेवतासंस्काराद्वारा यागोत्पत्त्यपूर्वेऽप्युपकारकत्वं समुच्चीयते। अत्र च व्रीह्यादीनां पिष्टद्वारा पुरोडाशनिर्वर्तकत्वं तद्द्वारा यागशरीरतदुत्पत्त्यपूर्वजनकत्वं च भवति। याज्यानुवाक्यादेर्देवतासंस्कारद्वारा यागोत्पत्त्यपूर्वादावुपयोगित्वं देवतायाश्च साक्षाद्यागशरीरनिर्वर्तकत्वं तद्द्वारा तदुत्पत्त्यपूर्वनिष्पादकत्वं च भवति। यागस्य देवतोद्देशेन द्रव्यत्यागस्वरूपत्वाद् द्रव्यदेवते खलु यागस्वरूपमित्युपगमाच्चेति ध्येयम्। इदमेव चेति। संनिपत्योपकारकमेव च न त्वाराद्युपकारकमित्यर्थः। आश्रयि द्रव्यदेवतादिरूप आश्रयोऽस्यास्तीत्याश्रयि। पारिभाषिकी वाश्रयि कर्मेति संज्ञा। इदमेव सामवायिककर्मेत्यपि वदन्ति। किंच सामान्यतः कर्म द्विविधमर्थकर्म गुणकर्म चेति। तत्रात्मसमवेतापूर्वजनकं कर्मार्थकर्म यथाऽग्निहोत्रदर्शपूर्णमासप्रयाजानुयाजादिकं तस्यात्मगतफलापूर्वजनकत्वात्। द्रव्यादिसंस्कारजनकं द्वितीयम्। तदेव संनिपत्योपकारकमित्युक्तम्। तदपि द्वितीयमुपयोक्ष्यमाणसंस्कारकमुपयुक्तसंस्कारकं चेति। तत्रावघातप्रोक्षणादिकमुपयोक्ष्यमाणसंस्कारकं, यागे व्रीहीणामुपयोक्ष्यमाणत्वात्। प्रतिपत्तिकर्म चात्वालकृष्णविषाणप्रासनेडाभक्षणादिकमुपयुक्तकृष्णविषाणपुरोडाशादिसंस्कारकं द्वितीयम्। उपयुक्तस्याऽऽकीर्णकरस्यावशिष्यमाणद्रव्यादेर्विहितदेशे संस्कारविशेषहेतुः प्रक्षेपः प्रतिपत्तिकर्म। उपयोक्ष्यमाणसंस्कारभिन्नसंस्कारकर्मत्वं प्रतिपत्तिकर्मत्वमित्यपि वदन्ति। ननु भवतु कथंचिदिडाभक्षणस्य प्रधानयागोपयुक्ताकीर्णकरपुरोडाशद्रव्यप्रक्षेपात्मकत्वात्प्रतिपत्तिकर्मत्वं, चात्वाले कृष्णविषाणप्रासनस्याग्निहोत्रादिकर्मवद्विहितबहिर्देशविशेषे प्रक्षेपक्रियात्मकत्वात्कथं प्रतिपत्तिकर्मत्वं, तथा च तद्वदर्थकर्मत्वमेव तस्य। तदित्थं श्रूयते ज्योतिष्टोमे—नीतासु दक्षिणासु चात्वाले कृष्णविषाणां प्रास्यतीति। यजमानेन दक्षिणा दत्ता ऋत्विग्भिर्यदा नीतास्तदा यजमानः स्वहस्ते धृतं कृष्णमृगस्य शृङ्गं चात्वालनामकगर्ते परित्यजेत्। सोऽयं परित्यागोऽर्थकर्म। कुतः ? सप्रयोजनत्वलाभात्। प्रतिपत्तिकर्मत्वेऽपूर्वाभावे निरर्थकः स्यात्। तस्मादपूर्वलाभार्थकर्मत्वमेव न तु प्रतिपत्तिकर्मत्वमिति चेन्न।

**'कृष्णविषाणया कण्डूयतो'ति तृतीयाश्रुत्या यजमानशिरःकण्डूतावुपयुक्तस्य कृष्णविषाणस्य प्रतिपत्त्यपेक्षत्वात् । न च प्रतिपत्तिकर्मत्वेऽत्यन्तमपूर्वाभावः । चात्वाल एव प्रासनमित्येवंविधस्य नियमस्य वैधत्वेन प्रासनक्रियाप्रयुक्तापूर्वाभावेऽपि नियमापूर्वसद्भावात् । तस्मात्प्रासनं प्रतिपत्तिकर्मेति । तमेतं सर्वमभिप्रेत्य विनियोगविधिनिरूपणमुपसंहरति—तदेवमिति ।**

आरादुपकारक का संनिपत्योपकारक से भेद है । आरादुपकारक से परम अपूर्व–अन्तिम फलापूर्व–की उत्पत्ति होती है । यह उससे साक्षात् सम्बद्ध है । परमापूर्व से सीधे सम्बद्ध होने के कारण यह अदृष्टार्थ है, जब कि संनिपत्योपकारक यागोपयोगी द्रव्य, देवता और संस्कार से सम्बद्ध[1] होने के कारण यागशरीर में सहायक होता है और परमापूर्व से साक्षात् सम्बद्ध न होकर परम्परया होता है । 'यागस्वरूपेऽप्युपयुज्यते' में 'अपि' का यही भाव है कि आरादुपकारक केवल परमापूर्व से सम्बद्ध होता है, किन्तु सन्निपत्योपकारक यागशरीर के निर्माण में सहायक होता है और परम्परया परमापूर्व की निष्पत्ति में भी ।

संनिपत्योपकारक को ही आश्रयिकर्म भी कहते हैं क्योंकि द्रव्य आदि आश्रयों से यह विशिष्ट होता है ।[2]

## प्रयोगविधिः

**( ३७ ) प्रयोगप्राशुभावबोधको विधिः प्रयोगविधिः । स चाङ्गवाक्यैकवाक्यतापन्नः प्रधानविधिरेव । स हि साङ्गं प्रधानमनुष्ठापयन्विलम्बे प्रमाणाभावादविलम्बापरपर्यायं प्रयोगप्राशुभावं विधत्ते । न च तदविलम्बेऽपि प्रमाणाभाव इति वाच्यम् । विलम्बे हि अङ्गप्रधानविध्येकवाक्यतावगततत्साहित्यानुपपत्तिः । विलम्बेन क्रियमाणयोः पदार्थयोरिदमनेन सह कृतमिति साहित्यव्यवहाराभावात् । स चाविलम्बो नियते क्रमे आश्रीयमाणे भवति । अन्यथा हि किमेतदनन्तरमेतत्कर्तव्यमेतदनन्तरं वेति प्रयोगविक्षेपापत्तेः । अतः प्रयोगविधिरेव स्वविधेयप्रयोगप्राशुभावसिद्ध्यर्थं नियतं क्रममपि पदार्थविशेषणतया विधत्ते । अत एवाङ्गानां क्रमबोधको विधिः प्रयोगविधिरित्यपि लक्षणम् ।**

प्रयोग–कर्मसम्पादन–में शीघ्रता के भाव की ज्ञापकविधि प्रयोगविधि है । वह अङ्गवाक्यों के साथ एकवाक्यता को प्राप्त प्रधानविधि ही है । वह अङ्गसहित प्रधान का सम्पादन कराते हुए विलम्ब में प्रमाण का अभाव होने से 'अविलम्ब' इस दूसरे नाम वाले 'प्रयोगप्राशुभाव' का विधान करता है । यह नहीं ( कह सकते ) कि प्रयोग के अविलम्ब में भी प्रमाण का अभाव है, क्योंकि प्रयोग में विलम्ब मानने पर ( प्रयाज आदि ) अङ्ग और ( दर्श आदि ) प्रधान से सम्बद्ध विधियों में एकवाक्यता का बोध होने से उनका एक साथ होना ( साहित्य ) संगत नहीं हो सकेगा । विलम्ब से किये जाने वाले दो पदार्थों में—'यह इसके साथ किया गया है' इस प्रकार का एक साथ होने का कथन नहीं किया जा सकता । और वह 'अविलम्ब' एक निश्चित क्रम का आश्रय लेने पर ही हो सकता है । नहीं तो 'इसको इसके बाद करना चाहिये अथवा उसके बाद में, इस प्रकार का विक्षेप अनुष्ठान में होने लगेगा । इसलिये प्रयोगविधि ही अपने अनुष्ठेयकर्मों में शीघ्रता के भाव की सिद्धि के लिये कर्म के विशेषण के रूप में

१. द्रव्यद्वारा अवघातादेः । देवतास्मरणद्वारा उद्देशस्य । संस्कारद्वारा प्रोक्षणादेः । यागस्वरूपे अपीति । यागस्वरूपसम्पादनेपीत्यर्थः । प्रतिपादिका पृ० ७६.

२. द्रव्यादिरूपाश्रयविशिष्टमाश्रयि तादृशं कर्म्मेत्यर्थः । वही पृ० ७६.

निश्चित क्रम का भी विधान करती है। इसीलिये 'अङ्गों के क्रम का बोध कराने वाली विधि प्रयोगविधि है, यह भी ( इसका ) लक्षण है।

इदानीं प्रयोगविधिं निरूपयति—प्रयोगेत्यादिना। साङ्गप्रधानकर्मप्रयोगप्राशुभावबोधक इत्यर्थः। स च प्रयोगविधिः प्रयाजाद्यङ्गजातवाक्यैकवाक्यतामापन्नो 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'त्यादिप्रधानविधिरेवोक्तवक्ष्यमाणविधित्रयमेलनरूपश्चतुर्थोऽयं विधिर्न तु विध्यन्तरमित्याह—स चेति। तत्र हेतुं प्रदर्शयन् प्रयोगप्राशुभावशब्दं व्याचष्टे—स हीत्यादिना। प्रयोगविधिः साङ्गप्रधानकर्मप्रयोगाविलम्बं विधत्ते तद्विलम्बे प्रमाणाभावात्संप्रतिपन्नवत्। तत्र प्रयोगविधिप्रयोग विलम्वं विधत्ते तदविलम्बे प्रमाणाभावादिति संप्रतिसाधनतामाशङ्क्य समाधत्ते—न चेत्यादिना। अङ्गप्रधानविध्योरेकवाक्यतयावगतस्याङ्गप्रधानयोः साहित्यस्यानुपपत्तेरेव तदविलम्बे प्रमाणत्वान्न तत्र प्रमाणाभाववचनं शोभतेतरामिति। तत्रार्थापत्तिं प्रमाणं दर्शयति—विलम्ब इत्यादिना। हिशब्देन तत्साहित्यनिश्चयं द्योतयति। प्रयाजाद्यङ्गजातमङ्गशब्दार्थः। प्रधानशब्देन च दर्शादिः प्रधानयागो ह्युच्यते। तावेव तच्छब्दार्थः। न च तत्साहित्यमेव नास्तीति वाच्यम्। अङ्गप्रधानविध्येकवाक्यत्वानुपपत्तेः, तस्य प्रयोजनान्तरानुपलब्धेश्च। नन्वविलम्बमन्तरेण नाङ्गप्रधानयोः साहित्यानुपपत्तिः, तेन विनापि तथा व्यवहारादित्याशङ्क्य मैवमित्याह—विलम्बेनेत्यादिना। पूर्वेऽह्नि परेऽह्नि च क्रियमाणयोर्भोजनयोरिदमनेन भोजनेन सह कृतमिति व्यवहारादर्शनान्न विलम्बेन क्रियमाणयोरङ्गप्रधानयोः साहित्यव्यवहारोऽभ्रान्तस्योपपद्यते ततश्च सा तदवस्थेत्यर्थः। सोऽप्यङ्गप्रधानयोरविलम्बस्तन्नियतक्रमसमाश्रयणे संभवति यथाग्नेयहविरभिघारणं, ततश्चैन्द्रदधिहविरभिधारणं तत आग्नेययागानुष्ठानं, तदनन्तरमैन्द्रदधियागानुष्ठानमिति नियतः क्रमः। ततश्चैकान्तरितव्यवधानेनाबिलम्ब इति सर्वमुपरिष्टात्स्पष्टीभविष्यतीत्यभिप्रेत्याह—स चेत्यादिना। क्रमानङ्गीकारे दोषमाह—अन्यथेत्यादिना। प्रयोगविक्षेपापत्तेरिति। किमाग्नेयहविषोऽभिघारणमैन्द्रदधिहविरभिघारणानन्तरं कर्तव्यं किंवैन्द्रदधिहविषोऽभिघारणमाग्नेयहविरभिघारणानन्तरमित्येवं सर्वत्र संदेहेन सर्वानुष्ठानोच्छेदापत्तेरित्यर्थः। 'संशयात्मा विनश्यती'त्यादिना भगवद्वचनेन संशयात्मन ऐहिकभोगसाधनेऽपि प्रवृत्त्यभावोपलम्भान्न संदिहानस्यामुत्र भोगसाधने प्रवृत्तिरुपपद्यत इति भावः। ननु नाङ्गप्रधानयोर्नियतः क्रम उपपद्यते, तद्विधायकाभावात्। न च प्रयोगविधिरेव तद्विधायकः, वाक्यभेदापातात्। कथं न प्रयोगविधेरेव प्रयोगप्राशुभावविधायकत्वे गुणप्रधानयोर्नियतक्रमविधायकत्वे च वाक्यभेदापात इति चेन्मैवमित्याह—अत इत्यादिना। यतोऽङ्गप्रधानयोर्नियतक्रममन्तरेणाविलम्बापरनामधेयप्रयोगप्राशुभावो नोपपद्यतेऽतः स्वविधेयप्रयोगप्राशुभावसिद्ध्यर्थं नियतं क्रममपि प्रयोगविधिरेव विधत्ते इत्यर्थः। वाक्यभेदनिरासाय पदार्थविशेषणतयेत्युक्तं व्यापारभेदेन हि विधाने वाक्यभेदो भवति, न तु विशिष्टविधान इत्यवोचामेति भावः। पदार्थश्चात्र क्रियारूपो ग्राह्यः, अन्यथा क्रमविधानानुपपत्तेः। तदुक्तं माधवेन—'यद्यपि क्रमस्य क्रियात्वाभावात्स्वरूपेण न विधियोग्यता तथापि दध्ना जुहोतीत्यादावक्रियारूपं दधिद्रव्यं यथा क्रियाविशेषणं सद्विधीयते दधिसाधनकं होमं कुर्यादिति, एवमनेन क्रमेण कर्तव्यमिति क्रियाविशेषणतया क्रमो विधीयता'

**मिति । यतः प्रयोगविधिरेव पदार्थविशेषणतया तन्नियतक्रममपि विधत्तेऽत एव कारणात्तस्य लक्षणान्तरमपीत्याह**—अत एवेति ।

विधि का प्रारम्भिक परिचय देते समय इसी ग्रन्थ में पहले जो वर्गीकरण किया गया था उसमें पहले उत्पत्तिविधि का उल्लेख था, फिर विनियोगविधि और उसके बाद क्रमशः अधिकारविधि तथा प्रयोगविधि का। किन्तु यहाँ प्रथम दो का निरूपण करने के बाद अधिकारविधि को न लेकर प्रयोगविधि पर विचार किया जारहा है। इस प्रकार से एक दृष्टि से यह क्रमभङ्ग नाम का दोष हुआ। इसे या तो प्रारम्भ में ही तृतीय स्थान पर रखना था अथवा अधिकारविधि को बाद में निरूपित होना था। किन्तु प्रतीत होता है कि विनियोगविधि के निरूपण से अङ्ग और प्रधान वाक्यों का ज्ञान हो जाने से तत्काल प्रयोग में सुकरता होती है, यही प्रदर्शित करना ग्रन्थकार का उद्देश्य है।

प्रयोगविधि का लक्षण देखने से स्पष्ट होता है कि इससे न तो अङ्गता का ज्ञान होता है न स्वयं में प्रधानता का ही। अङ्गता का ज्ञापक होने से इसे विनियोगविधि में अन्तर्भूत हो जाना चाहिये और प्रधानता का ज्ञापक होने से उत्पत्तिविधि में। उसी को ग्रन्थकार ने स्पष्ट किया है कि इसको सामान्यतः प्रधानविधि ही समझना चाहिये, किन्तु दोनो में अन्तर यह है कि जहाँ प्रधानविधि अकेले कर्मस्वरूपमात्र का बोध कराती है और गुणविधि अङ्गता का, वहीं इसके द्वारा अङ्गवाक्यों को संयोजित करके उनमें क्रमबद्धता लाकर एकवाक्य-सा अर्थबोधक बना दिया जाता है। जिस प्रकार एक वाक्य में कर्त्ता, क्रिया, कर्म आदि परस्पर भिन्न पदसमूह परस्पर मिलकर एक सम्मिलित अर्थ का ज्ञान कराते हैं, उसी प्रकार अङ्गों के बोधक भिन्न-भिन्न वाक्यों को संयोजित करके उनसे एक अविरुद्ध अर्थ का बोध कराना एकवाक्यतापादन है। उदाहरणार्थ, देखा जा सकता है कि 'स्वर्गकामो यजेत' वाक्य में 'स्वर्गकाम' और 'यजेत' पद अपना-अपना अर्थ 'स्वर्ग की कामना वाला' तथा 'याग करे' का बोध कराकर विरत हो जाते हैं, किन्तु आकाङ्क्षावश इनके परस्पर मिल जाने से उनको वाक्य कहा जाता है, उसी प्रकार 'दर्शपौर्णमासाभ्यां यजेत,' 'समिधो यजति,' 'इडो यजति' इत्यादि वाक्यों के अपना-अपना अर्थबोध कराने के बाद कार्य समाप्त हो जाने पर भी उपकार्य एवं उपकारक आकांक्षा होने से परस्पर मिल जाने के कारण इनमें एकवाक्यता हो जाती है। इसलिये जिस प्रकार परस्पर अन्वित पदसमूह वाक्य हैं, उसी प्रकार परस्पर अन्वित वाक्यों का समूह महावाक्य है। यह महावाक्यता ही प्रकारान्तर से एकवाक्यता है। कुमारिलभट्ट के अनुसार—

अर्थबोधे समाप्तानामङ्गाङ्गित्वाद्यपेक्षया ।
वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते ॥

इस प्रकार प्रयोगविधि भी प्रधानविधि ही है, कोई भिन्न नहीं।

एकवाक्यता के कारण आगे-पीछे अन्वित वाक्यों से क्रम का ज्ञान होता है कि अमुक पूर्ववर्ती वाक्य से बोधित कर्म के पश्चात् उसके परवर्ती वाक्य से बोधित कर्म को सम्पन्न करना चाहिये। इस क्रम के कारण कर्मसम्पादन में शीघ्रता होती है—अविलम्बता होती है। क्रम का निर्धारण अविलम्बता के लिये ही किया गया है, अतः कोई कार्य एक कार्य के बाद विलम्ब से किया जाये, इसमें कोई प्रमाण नहीं है। यदि विलम्ब अपेक्षित होता तो अङ्गकर्मबोधक तथा प्रधानकर्मबोधक भिन्न-भिन्न वाक्यों में एकवाक्यता लाकर—उनको परस्पर अन्वित कर-एक साथ क्यों रखा जाता? विलम्ब अपेक्षित होने पर वाक्यों को एक साथ रखना—साहित्य-संगत नहीं होता। जिन कर्मों को विलम्ब से सम्पन्न किया जाता है उनके लिये यह नहीं कहा जाता कि उन दोनों को एक साथ किया गया है। इस प्रकार अङ्ग तथा प्रधान वाक्यों को एक साथ रखने का अर्थ ही होता है, उनसे बोधित कर्मों में शीघ्रता होना।

कर्म का क्रम निश्चित होने पर उनके सम्पादन में शीघ्रता होती है, अन्यथा यह तय करने में 'कि किसे किसके बाद करें?' कार्य में बाधा पड़ती है और विलम्ब हो जाता है। इसी से क्रम का बोध कराने से प्रयोग में प्राशुबोधक प्रयोगविधि को क्रमबोधकविधि भी कहा जाता है।

प्रयोगविधि में एक साथ अन्वित गुण तथा प्रधान वाक्य अर्थबोध कराते हैं। वहाँ शब्दशः यह निर्देश नहीं होता कि 'इसके बाद उसे कीजिये'। फिर क्रम का ज्ञान कैसे होता है, यह समस्या उठती है। उसी के समाधान के लिये कहा गया है कि 'पदार्थ' अर्थात् कर्म के विशेषण के रूप में क्रम का सन्निवेश होता है। कहीं विशेषण स्पष्ट होता है, जैसे 'होतुः प्रथमभक्षः' में 'भक्ष' कर्म का विशेषण 'प्रथम' और कहीं कर्मों के उल्लेखक्रम आदि के द्वारा ही पौर्वापर्य का निर्णय हो जाता है। एक ही वाक्य का क्रम अर्थ भी लेने पर वाक्यभेद नामक दोष हो जाता, किन्तु विशेषण होने से विशिष्टविधान हो जाता है और वह दोष नहीं माना जाता है।

### क्रमस्वरूपम्

**( ३८ ) तत्र क्रमो नाम विततिविशेषः, पौर्वापर्यरूपो वा।**

### श्रुत्यादिषट्प्रमाणानि

**तत्र षट् प्रमाणानि—श्रुति-अर्थ-पाठ-स्थान-मुख्य-प्रवृत्त्याख्यानि।**

### श्रुतिलक्षणम्

**तत्र क्रमपरवचनं श्रुतिः। तच्च द्विविधम्—केवलक्रमपरं तद्विशिष्टपदार्थपरं चेति। तत्र 'वेदं कृत्वा वेदिं करोती'ति केवलक्रमपरं, वेदिकरणादेर्वचनान्तर-प्राप्तत्वात्। 'वषट्कर्तुः प्रथमभक्ष' इति तु क्रमविशिष्टपदार्थपरम्। एकप्रसरता-भङ्गभयेन भक्षानुवादेन† क्रममात्रस्य विधातुमशक्यत्वात्।**

**सेयं श्रुतिरितरप्रमाणापेक्षया बलवती। तेषां वचनकल्पनद्वारा‡ क्रमप्रमाण-त्वात्। अत एवाश्विनग्रहस्य पाठक्रमात्तृतीयस्थाने ग्रहणप्रसक्तौ 'आश्विनो दशमो गृह्यत' इति वचनाद्दशमस्थाने ग्रहणमित्युक्तम्।**

वहाँ[1] (अर्थात् प्रयोगविधि के क्रमबोधक द्वितीय लक्षण में प्रयुक्त) क्रम का अर्थ है—विस्तारविशेष अथवा आगे-पीछे होना। क्रम-निर्धारण में श्रुति, अर्थ, पाठ, स्थान, मुख्य और प्रवृत्ति नामक छः प्रमाण होते हैं। इन छः प्रमाणों में क्रमबोधक शब्द को श्रुति कहते हैं। श्रुतिप्रमाण दो प्रकार का होता है—१-केवल क्रमबोधक और २-क्रमविशिष्ट पदार्थ-बोधक। इन दोनो भेदों में से 'कुशमुष्टि (वेद) को करके गड्ढाविशेष (वेदि) को करते हैं, यह केवल क्रमबोधक है, क्योंकि वेदि के निर्माण आदि से सम्बद्ध अन्य वाक्य अन्यत्र उक्त हैं। 'वषट् करने वाला का भक्षण प्रथम हो' यह क्रमविशिष्ट पदार्थ का बोधक है। एकवाक्यता का भङ्ग होने के डर से 'भक्ष' का अनुवाद करके क्रममात्र का विधान असम्भव है।

यह चर्चित श्रुति अन्य प्रमाणों की अपेक्षा प्रबल है क्योंकि अन्यों में क्रमबोधक शब्द की कल्पना करके ही क्रम में प्रमाणता होती है। इसीलिये पाठ-क्रम से आश्विनग्रहण तृतीय स्थान पर प्राप्त था, किन्तु 'आश्विनो दशमो गृह्यते'—आश्विन दशम स्थान पर गृहीत होता है—इस शब्द के कारण दशम स्थान पर उसका ग्रहण हो, ऐसा (मी० सू० के पञ्चम अध्याय के चतुर्थपाद के प्रथम अधिकरण में) कहा गया है।

**ननु क्रमबोधक इत्यत्र किंलक्षणः क्रमोऽभिमत इत्याकाङ्क्षायां क्रमं लक्षयति—तत्र क्रम इति। यद्वा, वाक्यार्थबोधे पदार्थज्ञानस्य हेतुत्वात्क्रमपदार्थज्ञानमन्तरेण प्रयोग-**

---

† भक्षणानुवादेन इति पाठान्तरम्।

‡ वचनकल्पनाद्वारा इति पाठान्तरम्।

१. तत्रेति। प्रयोगविधेर्द्वितीयलक्षणे इत्यर्थः। प्रतिपादिका पृ० ८०

विधिलक्षणवाक्यार्थबोधो न स्यात्ततश्च क्रमपदार्थो वक्तव्य इत्याकाङ्क्षायां क्रमलक्षणमाह—तत्र क्रम इति । तत्र, प्रयोगविधिलक्षणवाक्यार्थघटकपदार्थानां मध्य इत्यर्थः । विततनं वितानो वा विततिः । 'तनु विस्तार' इति धातोः स्त्रियां भावे क्तिन्प्रत्यये विततिरिति रूपम् । तथा च बहुभिः कर्तृभिर्युगपत्कृतानामपि पदार्थानां वितानविशेषो भवत्येव न तु तत्र क्रमव्यवहार इत्यरुच्या लक्षणान्तरमाह—पौर्वापर्यरूपो इति । यद्वा, युगपत्कृतानां क्रमेण कृतानां वा पदार्थानां वितानाविशेषेऽपि विशेषपदसूचितं पौर्वापर्यरूपं विवक्षितं लक्षणार्थं लक्षणान्तरव्याजेन वाशब्दमनास्थायां निश्चयार्थं वा मत्वा प्रकटयति—पौर्वापर्यरूपो वेति । तदुक्तं तत्तत्पदार्थानन्तरं तत्तत्पदार्था इत्येवमनेकपदार्थवृत्तिपौर्वापर्यसमुदायरूपविततिरेव क्रम इति । अत्र भाट्टदीपिकाकारास्तु 'तत्र क्रमो नामाव्यवहितोत्तरत्वरूपमानन्तर्यम् । तच्चैकप्रतियोगिकमेकवृत्ति यथा 'वेदं कृत्वा वेदिं करोती'त्यत्र वेदकरणप्रतियोगिकमानन्तर्यं वेदिकरणवृत्ति । अत्र दर्शपूर्णमासोत्तरं त्वस्यासोमाङ्गत्वात् तद्व्यावृत्त्यर्थमव्यवहितेति विशेषणम् । तत्र दर्शपूर्णमासपूर्वकालताकत्वमात्रं क्त्वाप्रत्ययार्थः, न त्वव्यवहितांशोऽपि । न च सोमविधेस्तदपेक्षा, येनाव्यवधान एव तत्पर्यवस्येत, सोमविधेर्भिन्नप्रयोगविधिविधेयदर्शपूर्णमासप्रतियोगिकक्रमानपेक्षत्वात् । अतस्तत्रोत्तरकालत्वमेव विधेयं न क्रमः । क्रमश्च सर्वत्रोत्तरपदार्थाङ्गं, तस्यैव क्वाहं कर्तव्य इत्यपेक्षणान्न तु पूर्वपदार्थाङ्गं मदुत्तरं कः पदार्थः कर्तव्य इत्यपेक्षायाः क्वचिदप्यदर्शनात् । पूर्वपदार्थस्तु प्रतियोगितया क्रमविशेषणं दर्शपूर्णमासादिरिव पूर्वकालतायाः । एतेन क्रमः पदार्थद्वयाङ्गमिति केषांचिदुक्तमपास्तम्, प्रमाणाभावात् । अस्तु वा 'प्रथमभक्ष' इत्यादौ प्राथम्यं पूर्वपदार्थाङ्गमेवेत्याहुः ।

तन्नियमे च षट् प्रमाणानि श्रुत्यादीनि भवन्तीत्याह—तत्रेति । तत्र क्रम इत्यर्थः ।

तत्र श्रुतिं लक्षयति—तत्रेति । तत्र षट्सु प्रमाणेषु मध्य इत्यर्थः । क्रमपरवचनं, वृत्त्या क्रमबोधकं, क्लृप्तशब्द इत्यर्थः । तच्चाथशब्दादिकम् । तत्राथशब्दस्यानन्तर्यवाचित्वं शक्त्यैव, क्त्वाप्रत्ययादीनां तु पूर्वकालादिवाचिनामपेक्षानुरोधात्क्रमपरत्वं लक्षणतया, अर्थादिषु कल्प्यशब्दस्यैव क्रमबोधकत्वात् क्लृप्तेति विशेषणम् । श्रुतिं विभजते—तच्चेति । क्रमपरवचनं चेत्यर्थः । तत्र केवलक्रमपरं वचनमुदाहरति—तत्रेत्यादिना । तत्र द्वयोर्द्वयोर्मध्य इत्यर्थः । वेदः दर्भमुष्टिविशेषः । वेदिः आहवनीयगार्हपत्ययोर्मध्ये चतुरङ्गुलं निखातं भूतलं हविर्विधानस्थानविशेषरूपम् । तस्य केवलक्रमपरत्वे हेतुमाह—वेदीत्यादिना । दर्शपूर्णमासयोर्हविरधिवासनोत्तरं वेदिकरणविधिवाक्येनैव वेदिकरणस्य प्राप्तत्वात्तदनुवादेन क्त्वाप्रत्ययोक्तक्रममात्रमत्र विधीयत इति भावः । अत्र क्त्वाप्रत्ययोक्तस्य क्रमस्य वाक्यादेव वेदिकरणाङ्गत्वं तत्त्वेनैव तद्विधिरिति बोध्यम् । क्रमविशिष्टपदार्थपरं वचनमुदाहरति—वषट्कर्तुरिति । ननु भक्षस्य कथंचित्संभवत्प्राप्तिकत्वसंभवात् प्रथमशब्दोक्तक्रममात्रस्यात्रापि विधानं भविष्यतीत्याशङ्क्य तत्र हेतुमाह—एकेत्यादिना । तथा च प्राथम्यविशिष्टैकभक्षपदार्थप्रसरभावस्य विशिष्टोपस्थितिरूपस्य भङ्गभिया न क्रममात्रं विधातुं शक्यते । अन्यथा यो वषट्कर्तुर्भक्षः स प्रथम इत्युपस्थितिः स्यान्न तु वषट्कर्तृत्वोपाधिविशिष्टसंबन्ध्यभिन्नः प्राथम्यविशिष्टभक्ष इति भावः । यद्वा, एकप्रसरताभङ्ग एकवाक्यताभङ्गो

बोध्यः। भक्षस्याध्यनेनैव विधानाभ्युपगमात्। तथा चानेन विहितभक्षानुवादेन प्रथमशब्दोपात्तक्रमविधान एकवाक्यताभङ्गेनावृत्त्यात्मको वाक्यभेदः स्यादिति भावः। अत्रापि क्रमविशिष्टभक्षविधानात्प्रथमपदोक्तक्रमस्य वाक्याद्भक्षाङ्गत्वमिति ध्येयम्। अत्रेदं बोध्यम्—यत्र धात्वर्थस्य क्लृप्तप्रमाणेन प्राप्त्यभावेऽपि कथंचित्संभवत्प्राप्तिकस्य पुनर्विधानेन किंचित्प्रयोजनं विधेयान्तरं च नान्यत्किंचित्तत्र क्रम एव श्रुत्युक्तो विधीयते। यथा सत्रात्मके द्वादशाहे, 'अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति तत उद्गातारं ततो होतारं, ततस्तं प्रतिप्रस्थाता दीक्षयित्वार्ऽधिनो दीक्षयति ब्राह्मणाच्छंसिनं ब्रह्मणः, प्रस्तोतारमुद्गातुः मैत्रावरुणं होतुस्ततस्तं नेष्टा दीक्षयित्वा तृतीयिनो दीक्षयति आग्नीध्रं ब्रह्मणः, प्रतिहर्तारमुद्गातुरच्छावाकं होतुस्ततस्तमुन्नेता दीक्षयित्वा पादिनो दीक्षयति पोतारं ब्रह्मणः, सुब्रह्मण्यमुद्गातुर्ग्रावस्तुतं होतुस्ततस्तमन्यो ब्राह्मणो दीक्षयति ब्रह्मचारी वाचार्यप्रेषित' इति श्रुते वाक्ये अत्र हि न दीक्षायाः स्वरूपेण तत्तत्संस्कारकत्वेन वा विधिरतिदेशप्राप्तत्वात्। प्रकृतौ हि यजमानसंस्कारार्था दीक्षातिदेशेनैव सत्रे प्राप्यते, सत्रे च ये यजमानास्त ऋत्विज इति वचनेन ऋत्विक्कार्योद्देशेन यजमानविधानाद् ब्रह्मादीनां यजमानत्वेनैव प्रतिप्रधानगुणावृत्तिन्यायेन तत्तत्संस्कारकत्वप्राप्तेः, ततश्च दीक्षारूपं धात्वर्थमनूद्याख्यातेन, क्त्वाप्रत्ययोक्तस्ततःशब्दोक्तश्च क्रमो विधीयते। अत्र चायमर्थः अध्वर्युर्यजुर्वेदोक्तं करोति तस्य पुरुषास्त्रयः प्रतिप्रस्थाता नेष्टोन्नेता चेति। एते चत्वारो दीक्षयितारः। ब्रह्मा वेदत्रयोक्तस्य प्रत्यवेक्षणं करोति, तस्य पुरुषास्त्रयः ब्राह्मणाच्छंसी अग्नीत् पोता चेति। उद्गातोद्गानं करोति, तस्य पुरुषास्त्रयः प्रस्तोता प्रतिहर्ता सुब्रह्मण्यश्चेति। होता शंसनं करोति, तस्य पुरुषास्त्रयः मैत्रावरुणोऽच्छावाको ग्रावस्तुच्चेति। चतुर्षु वर्गेषु ये प्रथमास्ते दक्षिणां संपूर्णामाप्नुवन्ति। ये द्वितीयास्ते तदर्धं प्राप्नुवन्ति ततोऽर्धिन उच्यन्ते। ये तृतीयास्ते तृतीयांशं प्राप्नुवन्तीति तृतीयिनः। ये चतुर्थास्ते चतुर्थांशं प्राप्नुवन्तीति पादिनः। तानेतानुक्तक्रमेण स स पुरुषः करोतीति। किंच 'इतरमन्यस्तेषां यतो विशेषः स्या'दिति न्यायेनाध्वर्युपुरुषाणामाद्यः प्रतिप्रस्थातैवाध्वर्युदीक्षायां प्राप्नोति। ब्राह्मणाच्छंस्यादिदीक्षासु त्वध्वर्योर्नि पूतः पावयेदिति वचनेन सत्रप्रकरणपठितेन दीक्षासु दीक्षाख्यसंस्काररहितपुरुषकर्तृविधायकेन पर्युदासात् प्रतिप्रस्थातृप्राप्तिः सुलभैव। एवं प्रतिप्रस्थात्रादिदीक्षासु नेष्टुः प्रतिप्रस्थात्रनन्तरस्य नेष्ट्रादिदीक्षासु चोन्नेतुर्नेष्ट्रनन्तरस्य प्राप्तिर्न्यायादेवेति न विनेयान्तराशङ्का। अतः क्रम एवात्राप्राप्तः स एव तत्तद्दीक्षोद्देशेन विधीयते। अत एव चैतानि द्वादशवाक्यानि श्रौतक्रमविधायकानि अर्धित्वाद्युद्देश्यतावच्छेदकमङ्गीकृत्य षडेव वा। उन्नेतृदीक्षावाक्ये तु वैकल्पिकब्रह्मचारिविधानात् हृदयादिन्यायेन पाठादेव क्रमसिद्धेस्तत इत्यनुवादः। निपातत्वाच्च वाशब्दस्य ब्रह्मचारिविशेषणत्वेन न वाक्यभेदः। ब्राह्मणानामेवार्त्विज्यविधानाद् ब्राह्मण इति चानुवादः। ब्रह्मचारिणश्चाचार्याधीनत्वस्मृतेराचार्यप्रेषित इत्यप्यनुवादः। यत्तु—यद्यप्यत्र क्रमस्य वाचकः शब्दो नास्ति तथापि वाक्येन प्रतीयते। स च प्रतीयमानः क्रमो मानान्तरेण कर्तव्यतया प्राप्त्यभावादिह विधीयत इति। तन्न, क्त्वाप्रत्ययादेः क्रमवाचकस्योक्तत्वात्। अतः क्रम एवात्राप्राप्तस्तत्तद्दीक्षोद्देशेन विधीयते क्त्वाप्रत्ययोक्तस्ततः पदोक्तश्चेति भाट्टदीपिकाविरोधाच्चेति। इदानीमुक्तश्रुतेरर्थ-

**पाठादिप्रमाणापेक्षया प्राबल्यमाह—सेयं श्रुतिरिति। अर्थादिप्रमाणानां श्रुतिकल्पनद्वारा क्रमे प्रामाण्यादिति। तत्र हेतुमाह—तेषामित्यादिना। ज्योतिष्टोम ऐन्द्रवायवादिग्रहेष्वाश्विननामकग्रहस्तृतीयस्थाने पठितः। ततश्च तृतीयस्थाने ग्रहणप्रसक्तावपि तस्य दशमस्थानत्वमाश्विनो दशमो गृह्यत इति शब्देनैवाम्नायत इति तत्र गमकमप्याह—अत एवेत्यादिना। अत एव, इतरप्रमाणापेक्षया श्रुतेः प्राबल्यादेवेत्यर्थः। इत्युक्तमिति। पञ्चमाध्याये चतुर्थपादस्य प्रथमाधिकरण इति शेषः। पाठो हि न क्रमस्याभिधायकः किं त्वन्यथानुपपत्त्या क्रमं कल्पयति। दशम इत्येषा श्रुतिस्तु साक्षादेव क्रममभिधत्ते। ततः पाठादपि श्रुतिः प्रबलेति भावः।**

क्रम के यहाँ दो लक्षण दिये गये हैं। प्रथमतः उसको विशेष प्रकार की वितति या विस्तार कहा गया है। जहाँ बहुत-सी वस्तुयें एक साथ रखी जाती हैं वहाँ विस्तार हो ही जाता है। उसी प्रकार अङ्ग एवं प्रधान कर्मों का एकत्र समन्वय करने पर कर्मों में वितति स्वतः हो जायेगी। किन्तु यह विस्तार अबुद्धिपूर्वक किया गया जमाव नहीं है, यहाँ वस्तुओं या कर्मों का सङ्घटन बुद्धिपूर्वक एक दिशा में होता है। इसीसे यह 'विततिविशेष' अथवा विशेष प्रकार का विस्तार है। वितति और विततिविशेष का अन्तर इस उदाहरण से समझा जा सकता है। बहुत से पीपे, लट्ठे या लोहे के छल्ले एक साथ भाण्डार में रखे जा सकते हैं और अनेकसंख्यक होने से उनका सजातीय विस्तार अथवा ढेर बन सकता है। यह वितति है। किन्तु जब इनमें एक के बाद दूसरे को सम्बद्ध करके रखा जाता है तब उनसे पुल या जञ्जीर बन जाती है। यही विशेष प्रकार का विस्तार है। इसी प्रकार का विस्तार अनुष्ठान में एक के बाद दूसरे कर्म का भी अपेक्षित होता है। यह लक्षण बहुत आसानी से अभीष्ट अर्थ नहीं प्रकट करता और न पदार्थ के विशेषण के रूप में क्रम आ पाता है, अतः दूसरा लक्षण 'पौर्वापर्यरूपो वा' दिया गया है। 'कौन पहले रहे और कौन बाद में' इसकी निश्चित व्यवस्था ही क्रम है, इसी को पौर्वापर्य भी कहते हैं।

पौर्वापर्य को निर्धारित करने में छः प्रमाण सहायक होते हैं। उनका निरूपण क्रमशः किया जा रहा है। इनमें प्रथम है श्रुतिप्रमाण। इसमें क्रम का वाचक शब्द स्वयं उपस्थित होता है जिसकी 'श्रुति' अर्थात् श्रवणमात्र से ज्ञात हो जाता है कि किसके बाद क्या करना है। इसी से भाष्यकार शबर मुनि ने कहा था 'यदर्थस्याभिधानं शब्दस्य श्रवणमात्रादेवावगम्यते।' कुछ विद्वानों का विचार है कि उपस्थित शब्द से कहीं क्रम वाच्य होता है और कहीं लक्ष्य, अर्थात् अभिधा एवं लक्षणा दोनों शब्दशक्तियों से क्रम का ज्ञापन यथावसर होता है। 'अथ' शब्द अभिधा से 'आनन्तर्य' का वाचक है, अतः क्रम इसका वाच्य है। 'क्त्वा' प्रत्ययान्त पद लक्षणया क्रम का ज्ञान कराते हैं।

श्रुति से कहीं केवल क्रम का ही ज्ञान होता है और कहीं क्रमविशिष्ट पदार्थ का अर्थात् क्रम से सम्बद्ध वस्तु का भी। प्रथम का उदाहरण 'वेदं कृत्वा वेदिं करोति' वाक्य के 'क्त्वा' प्रत्यय से होता है।[1] 'क्त्वा' एक पूर्वकालिक प्रत्यय है जिससे ज्ञात होता है कि पहले किसे किया गया। पूर्वकाल में सम्पादन का यह बोधक है। इससे ज्ञात होता है कि पहले 'वेद' का निर्माण हुआ फिर 'वेदि' का। 'वेद' कुश का बना हुआ झाड़ने का साधन है और 'वेदि' 'आहवनीय' तथा गार्हपत्य अग्नियों के मध्य में खुदा हुआ चार अङ्गुल का गड्ढा है।

'वेदं कृत्वा वेदिं करोति' से केवल क्रम का ज्ञान अपेक्षित है क्योंकि 'वेद' का निर्माण कैसे किया

---

१. 'वेदं कृत्वा वेदिं करोति' इति श्रुतौ पूर्वकालवाचिना क्त्वाप्रत्ययेन क्रमः प्रतीयते। वेदो नाम दर्भमयं संमार्जनसाधनम्। वेदिः आहवनीय-गार्हपत्यमध्यवर्तिनी चतुरङ्गुलखाता भूमिः। जैमिनिन्यायमालाविस्तर पृ० ३०.

जाता है और 'वेदि' कैसे बनाई जाती है इस सबका उल्लेख 'दर्शपौर्णमास' के प्रकरण में हवि के अधिवास के वर्णन के प्रसङ्ग में हो चुका है। अतः वेदिकरण से सम्बद्ध अन्य वचन होने से यहाँ उसके निर्माण को क्रम से विशिष्ट नहीं माना जा रहा है, क्योंकि जिनका एक बार निरूपण हो चुका है उनका भी पुनः निरूपण करना उचित नहीं। अतः दूसरे वाक्यों से अप्राप्त क्रम का ही विधान यहाँ अपेक्षित है।[1]

जहाँ क्रम एवं कर्म दोनों वचनान्तर से अप्राप्त होते हैं वहाँ दोनों का कथन होता है। जैसे—'वषट्कर्तुः प्रथमभक्षः' में। वषट्कर्त्ता होता को कहते हैं। यहाँ 'भक्ष' पद का अर्थ सोमरस का पान—सोमभक्षण—है। 'प्रथम' पद भक्षण के साथ है और प्राथम्य का वाचक है। सम्मिलित अर्थ है 'प्राथम्यविशिष्ट सोमभक्षण'।[2] इस मन्त्र का तात्पर्य यह है कि यज्ञ में अवशिष्ट सोम का भक्षण होता नामक ऋत्विक् सर्वप्रथम करे उसके बाद उद्गाता, अध्वर्यु आदि। यहाँ 'प्रथम' पद क्रम का वाचक है और 'भक्ष' कर्म का। विधान है 'भक्षण' क्रिया का और उसका विशेषण है 'प्रथम' से ज्ञात 'प्राथम्य'। उक्त मन्त्र से प्राथम्यरूप क्रम से विशिष्ट भक्षण रूप पदार्थ का बोध होता है, अतएव इसकी 'क्रमविशिष्टपदार्थपरकता' सिद्ध होती है। 'भक्ष' का विधान करने वाली दूसरी विधि के न होने से इसी मन्त्र से उसका भी विधान होता है और क्रम का भी। केवल क्रम का ही विधान नहीं होता। यदि यह कहा जाये कि 'वषट्कर्तुः प्रथमभक्षः' से सबसे पहले 'भक्ष' का विधान कर लिया जाये और दुबारा प्राथम्यरूप क्रम का अर्थ लेते समय उसका अनुवाद विशिष्ट-पदार्थ लिया जाये तो यह संभव नहीं होगा क्योंकि ऐसी दशा में एक ही वाक्य के भक्षपरक तथा क्रमपरक दो भिन्न-भिन्न अर्थ करने से एकप्रसरता अर्थात् एकवाक्यता का भङ्ग हो जायेगा और वाक्यभेद नामक दोष होने लगेगा। ऐसी दशा में दोषहीन 'क्रमविशिष्टपदार्थ' मानना ही उचित है।

**श्रुति की अन्य प्रमाणों से प्रबलता**—श्रुतिप्रमाण अन्य प्रमाणों—अर्थ, पाठ आदि से प्रबल है। यह अन्यों से प्रबल इसलिये है क्योंकि इसमें क्रम का वाचक शब्द स्वयं उपस्थित रहता है। शब्द के प्राप्त होने से क्रम का ज्ञान तत्काल हो जाता है जिससे क्रिया के अनुष्ठान में शीघ्रता होती है। उदाहरण के लिये 'वेदं कृत्वा वेदिं करोति' में 'कृत्वा' पद वेद के प्रथमकर्तृत्व का ज्ञापक है। पहले किसे किया जाये यह जानने के लिये किसी अन्य वाक्य को खोजना नहीं पड़ता है। 'अर्थ' आदि प्रमाणों में वचन की—क्रमवाचक शब्द की—कल्पना करनी पड़ती है।

ज्योतिष्टोम याग के प्रकरण में ऐन्द्र, वायव और आश्विन के ग्रहण का क्रमशः पाठ है। इस क्रम से प्रथम स्थान पर ऐन्द्र का, द्वितीय पर वायव का, तृतीय पर आश्विन का ग्रहण होना चाहिये। किन्तु आश्विन के ग्रहण के विषय में श्रुतिवाक्य प्राप्त है—आश्विनो दशमो गृह्यते—अर्थात् आश्विन का ग्रहण दशम स्थान पर करे। इस प्रकार आश्विनग्रहण पाठप्रमाण से तृतीय किन्तु श्रुतिप्रमाण से दशम स्थान पर प्राप्त होता है। इस विवाद का निर्णय 'दशम' शब्द से होता है। 'पाठ' में स्वयं समझना पड़ता है, क्रम को गिनना पड़ता है, इसमें विलम्ब होता है, जब कि श्रुति में 'दशमः' शब्दतः उक्त होने के कारण अनुष्ठान में निर्भ्रान्त रूप से शीघ्रता कराता है। 'पाठप्रमाण' से होने वाले विधान को निरस्त करके श्रुतिप्रमाण से ही कार्य सम्पादन होना इसकी प्रबलता का सूचक है।

**इत्युक्तम्**—ग्रन्थ में पाठ है 'इत्युक्तम्'—ऐसा कहा गया है। इसका अभिप्राय यह है कि पाठ आदि की अपेक्षा श्रुति की प्रबलता और दशम स्थान पर आश्विनग्रहण का निरूपण मीमांसासूत्रों

---

१. अदग्धदहनन्यायेन यावदप्राप्तं तावद्विधीयत इति प्रमाणान्तराप्राप्तस्य क्रमस्यैव विधायकत्वमितिभावः। प्रतिपादिका पृ० ८२–३.

२. वषट्कर्त्ता होतेति माधवाचार्याः। प्रथमभक्ष इति। प्राथम्यविशिष्टं सोमभक्षणमित्यर्थः। विशिष्टस्याप्राप्तत्वादितिभावः। वही पृ० ८३.

में किया गया है। रामेश्वर शिवयोगी के अनुसार 'उक्तम्' के बाद "पञ्चमाध्याये चतुर्थपादस्य प्रथमाधिकरणे" इतना और पाठ होना चाहिये, जब कि श्रीकृष्णनाथ भट्टाचार्य के अनुसार 'उक्तम्' का अर्थ यह है कि इस विषय का प्रतिपादन भाष्यकार शबर मुनि ने विस्तार से किया है और यही सिद्धान्त स्थिर किया है।[1]

**उदाहरण पर विशेष विचार**—विनियोगविधि में प्रबलता का निरूपण करते समय प्रत्येक पूर्ववर्ती प्रमाण की प्रबलता यद्यपि समस्त परवर्तियों से बतलाई गयी है, किन्तु उदाहरण तत्काल बाद वाले का दिया गया है। उसके अनुसार यहाँ श्रुति को 'अर्थ' से प्रबल दिखलाना चाहिये था, किन्तु उदाहरण पाठक्रम का दिया गया है। इससे भास्कर की अनवधानता दृष्टिगोचर होती है। संभव है अर्थप्रमाण की अपेक्षा पाठप्रमाण का उदाहरण देने में सरलता समझकर उन्होंने ऐसा किया हो। अतः उदाहरण में न आने पर भी यह नहीं समझना चाहिये कि श्रुति 'अर्थ' से प्रबल नहीं है। वस्तुतः श्रुति से अर्थ, पाठ आदि सभी उत्तरोत्तर निर्बल हैं।

## अर्थलक्षणम्

**( ३९ ) यत्र प्रयोजनवशेन क्रमनिर्णयः सोऽर्थक्रमः यथा 'अग्निहोत्रं जुहोति', 'यवागूं पचती' त्यग्निहोत्रयवागूपाकयोः। अत्र हि यवाग्वा होमार्थत्वेन तत्पाकः प्रयोजनवशेन पूर्वमनुष्ठीयते।**

**स चायं पाठक्रमाद् बलवान्। यथापाठं ह्यनुष्ठाने क्लृप्तप्रयोजनबाधोऽदृष्टार्थत्वं† च स्यात्। न हि होमानन्तरं क्रियमाणस्य पाकस्य किञ्चिद् दृष्टं प्रयोजनमस्ति।**

जहाँ उद्देश्यविशेष के कारण क्रम का अवधारण हो वह अर्थक्रम है। जैसे–'अग्निहोत्रं जुहोति'—अग्निहोत्र करता है, 'यवागूं पचति'—लपसी पकाता है–अग्निहोत्र और यवागू-पाक इन दोनों में, क्योंकि यहाँ यवागू ( लपसी ) होम के लिये उपकारक होने से, उसका पाक उद्देश्यविशेष के कारण ( अग्निहोत्र से ) पहले सम्पन्न किया जाता है।

यह अर्थक्रम पाठक्रम से प्रबल है। पाठ के अनुसार अनुष्ठान करने पर निर्धारित प्रयोजन का बाध होने लगेगा और ( पाक की ) अदृष्टार्थता भी होगी, क्योंकि होम के पश्चात् सम्पादित किये जाने वाले पाक का कोई प्रत्यक्ष उद्देश्य नहीं रहेगा।

**इदानीमर्थक्रमं लक्षयति—यत्रेत्यादिना। प्रयोजनवशेन प्रयोजनानुपपत्त्या, तद्धि व्युत्क्रमेऽनुपपद्यमानं क्रमे प्रमाणमिति भावः। तत्रोदाहरणमाह—यथाग्निहोत्रमिति। अग्निहोत्रयवागूपाकयोरित्यत्र प्रयोजनवशेन क्रमनिर्णय इत्यनुषङ्गः। अत्र हीति। अत्र प्रकृते, यवागूहोमयोर्मध्य इति वार्थः। तत्पाकः पूर्वमनुष्ठीयत इत्यन्वयः, होमादिति शेषः, यवागूः तच्छब्दार्थः। यवागूपाकस्य पाठक्रमेण पश्चात्करणे पाकसंस्कृताया यवाग्वा होमरूपप्रयोजनस्य 'यवाग्वाग्निहोत्रं जुहोती'ति वचनसिद्धस्यानिष्पत्तेः। पाकस्य च यवागूत्पादकत्वेऽपि तस्या अनुपयुक्तायाः प्रयोजनत्वानुपपत्तेस्तदन्यथानुपपत्त्या पूर्वं पाकः पश्चाद्धोमोऽनुष्ठीयत इति भावः। अर्थक्रमश्च पाठक्रमाद्बलीयान्भवतीत्याह—स चायमिति। यवागूपाकस्य यथापाठमनुष्ठानेऽदृष्टार्थत्वं स्यादिति विपक्षे बाधकमाह—यथापाठमिति।**

---

१. उक्तं भाष्यकारादिभिरिति शेषः। प्रतिपादिका पृ० ८४.

† क्रमप्रयोजनबाधे पाकस्यादृष्टार्थत्वम् इति पाठान्तरम्।

**क्रमप्रयोजनबाधस्तु दर्शितो यवागूपाकस्येत्यारभ्यास्माभिरिति भावः। दृष्टमेव किंचित्संभवत्प्राप्तिकं भवेदित्यत आह—न हीत्यादिना। न हि भक्षणमन्तरेण किंचिद् दृष्टप्रयोजनमुपलभ्यते, तच्च न प्रकृतयवाग्वा, अदर्शनात्प्रमाणाभावाच्चेति भावः।**

कहीं-कहीं ऐसा भी पाठ मिलता है जहाँ होम आदि मुख्य क्रियाओं का उल्लेख उनकी सहायक क्रियाओं के उल्लेख से पहले और उनकी सहायक क्रियाओं—कुण्डखनन आदि का बाद में होता है। ऐसी परिस्थितियों में प्रयोजन की सिद्धि को ध्यान में रखकर पौर्वापर्य का निर्णय किया जाता है। इसके निर्धारण में सहायक प्रमाण को 'अर्थप्रमाण' कहते हैं। मूल में उद्धृत 'अग्निहोत्रं जुहोति' और 'यवागूं पचति' में इसे स्पष्ट किया गया है। पाठ में होम का उल्लेख पहले और द्रव्य यवागू के पाक का बाद में है। इसमें यवागूपाक पहले करना पड़ेगा, तभी होम सम्पन्न किया जा सकेगा। यदि होम के बाद यवागूपाक हुआ तो उसका निर्धारित लक्ष्य हवन सम्पन्न नहीं हो सकेगा—यही क्लृप्तप्रयोजन का बाध है। दूसरा दोष यह होगा कि होम के बाद यवागूपाक का कोई प्रत्यक्ष उद्देश्य नहीं समझ में आता, जब कि पहले पकाने पर उसका प्रत्यक्ष प्रयोजन हवनकर्म सर्वलोकगोचर होता है। यह बात अलग है कि बाद के यवागूपाक का कोई अदृष्ट प्रयोजन मान लिया जाये, किन्तु जहाँ दृष्ट प्रयोजन हो वहाँ अदृष्ट प्रयोजन मानना उचित नहीं। इससे सिद्ध होता है कि 'पाठ' से निश्चित 'क्रम' का बाध 'अर्थप्रमाण' से हो जाया करता है, अतः 'अर्थ' 'पाठ' से प्रबल है। 'अर्थ' की प्रबलता की सार्थकता से सम्बद्ध कारिकाएँ द्रष्टव्य हैं—

क्रमे श्रुत्यैव विहिते पाठतः को न कल्पयेत्।
प्रयोजनविरोधे वा कः पाठमनुरुध्यते॥
हुत्वा हि पचमानस्य भवेद् द्वयमनर्थकम्।
पाकश्चैव यवागूश्च तां पक्त्वा जुहुयात् ततः॥

पाठक्रमः

**(४०) पदार्थबोधकवाक्यानां यः क्रमः स पाठक्रमः। तस्माच्च पदार्थानां क्रम आश्रीयते। येन हि क्रमेण वाक्यानि पठितानि तेनैव क्रमेणाधीतान्यर्थप्रत्ययं जनयन्ति। यथाप्रत्ययं च पदार्थानामनुष्ठानम्। स च पाठो द्विविधः—मन्त्रपाठो ब्राह्मणपाठश्चेति। तत्राग्नेयाग्नीषोमीययोस्तत्तद्याज्यानुवाक्यानां पाठाद्यः क्रम आश्रीयते स मंत्रपाठात्।**

**स चायं मन्त्रपाठो ब्राह्मणपाठाद् बलीयान्, अनुष्ठाने ब्राह्मणवाक्यापेक्षया मन्त्रपाठस्यान्तरङ्गत्वात्। ब्राह्मणवाक्यं हि प्रयोगाद् बहिरेवेदं कर्तव्यमिति अवबोध्य कृतार्थम्। मन्त्राः पुनः प्रयोगकाले व्याप्रियन्ते, अनुष्ठानक्रमस्य स्मरणक्रमाधीनत्वात्। तत्क्रमस्य च मन्त्रक्रमाधीनत्वाद् अन्तरङ्गोऽयं मन्त्रपाठ इति। प्रयाजानां 'समिधो यजति, तनूनपातं यजति' इत्येवंविधपाठक्रमाद्यः क्रमः स ब्राह्मणपाठक्रमात्। यद्यपि ब्राह्मणवाक्यान्यर्थं विधाय कृतार्थानि तथापि प्रयाजादीनां क्रमस्मारकान्तरस्याभावात्तान्येव क्रमस्मारकत्वेन स्वीक्रियन्ते।**

कर्म के बोधक वाक्यों का जो क्रम है वही पाठक्रम प्रमाण है। उससे कर्मों का क्रम निश्चित होता है क्योंकि जिस क्रम से वाक्य पठित होते हैं उसी क्रम से वाचित होने पर अर्थ का ज्ञान कराते हैं। ज्ञान के क्रम से ही क्रियाओं का सम्पादन होता है। यह पाठ भी दो प्रकार का होता है—मन्त्रपाठ और ब्राह्मणपाठ। उनमें आग्नेय और अग्नीषोमीय यागों

उन-उन के याज्या और अनुवाक्या के पाठ से जो क्रम लिया जाता है वह मन्त्रपाठ से (समझना चाहिये।)

यह मन्त्रपाठ ब्राह्मणपाठ की अपेक्षा प्रबल होता है, क्योंकि अनुष्ठान में ब्राह्मणवाक्य की अपेक्षा मन्त्र-पाठ अन्तरङ्ग होता है। ब्राह्मणवाक्य अनुष्ठान से बाहर ही 'यह करना चाहिये' इतना बतला कर विरत हो जाता है, जब कि मन्त्र अनुष्ठान के समय व्यवहृत होते हैं, क्योंकि अनुष्ठान का क्रम स्मरण के क्रम पर आश्रित होता है और स्मरण का क्रम मन्त्र के क्रम के अधीन होता है, अतः यह मन्त्रपाठ अन्तरङ्ग होता है। 'समिधो यजति', 'तनूनपातं यजति' इस प्रकार के पाठ के क्रम से प्रयत्न आदि का जो क्रम होता है वह ब्राह्मणपाठक्रम से होता है। यद्यपि ब्राह्मणवाक्य अर्थों का विधान करके कृतकृत्य हो जाते हैं, तथापि प्रयाज आदि में कोई दूसरा क्रमस्मारक न होने से वे ब्राह्मणवाक्य ही क्रमस्मारक के रूप में स्वीकार किये जाते हैं।

पाठक्रमं लक्षयति—पदार्थेति। तस्माच्चेति। पाठक्रमाच्चेत्यर्थः। पाठक्रमात्पदार्थक्रममुपपादयति—येनेत्यादिना। वाक्यानीति पदस्याप्युपलक्षणम्। पदार्थप्रत्ययस्य क्वात्रोपयोग इत्यत आह—यथाप्रत्ययं चेति। पाठक्रमं विभजते—स च पाठो द्विविध इति। मन्त्रपाठक्रममुदाहरति—तत्रेत्यादिना। तत्र मन्त्रपाठब्राह्मणपाठयोर्मध्य इत्यर्थः। किंच अग्नीषोमीययागस्तैत्तिरीयब्राह्मणपञ्चमप्रपाठके द्वितीयानुवाके समाम्नातः 'ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छ'दिति। आग्नेययागस्तु षष्ठप्रपाठके तृतीयानुवाके आम्नातः—'यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवती'ति। तत्रानुष्ठानस्य ब्राह्मणोक्तविध्यधीनत्वादग्नीषोमीयस्य प्रथममनुष्ठानमित्याशङ्क्य मन्त्रकाण्डे पूर्वं पठिता आग्नेयमन्त्राः। तथाहि—हौत्रकाण्डे आज्यभागमन्त्रानुवाकादुत्तरस्मिन्ननुवाके प्रथमम् 'अग्निर्मूर्धे'त्यादिके आग्नेय्यौ याज्यानुवाक्ये आम्नाते। ततः 'प्रजापते नत्वदेतानी'त्यादि प्राजापत्ये। ततो'ऽग्नीषोमा सवेदसे'त्यादिके अग्नीषोमीये। आध्वर्यवे काण्डेऽप्यग्नये जुष्टं निर्वपाम्यग्नीषोमाभ्यामित्याग्नेयः पूर्वमाम्नातः। याजमानकाण्डेऽप्यग्नेरहं देवयज्ययान्नादो भूयासमित्याग्नेयस्य पश्चाद् "अग्नीषोमयोरहं देवयज्यया वृत्रहा भूयास" मित्याम्नायते। मन्त्रक्रमः प्रबलः मन्त्रैः स्मृत्वा पश्चादनुष्ठेयत्वाद् ब्राह्मणपाठस्त्वप्राप्तपदार्थे विधिनापि चरितार्थः। अतोऽनुष्ठानस्मरणायैवोत्पन्नान्मन्त्रान्बाधितुं नालमिति मन्त्रक्रमेणाग्नेयस्यैव प्रथममनुष्ठानमिति समाधानमभिप्रेत्य वा मन्त्रपाठस्य ब्राह्मणपाठाद्बलीयस्त्वमाह—स चायमित्यादिना। किंच पाठयोस्तु मन्त्रब्राह्मणगतयोर्मन्त्रपाठो बलीयान्, न तु ब्राह्मणपाठः तस्योत्पत्तिविनियोगविधिगतत्वेन प्रथमोपस्थितत्वेऽपि पाठस्य स्मारकक्रमं विधायैव क्रमनियामकत्वोक्तेर्मन्त्रसत्त्वे च तस्यैव स्मारकतया विधानोपयुक्तस्यासमर्थस्य च विधेः स्मारकत्वाभावान्मन्त्रपाठक्रम एव बलीयान्। तेन च याज्यानुवाक्यादिमन्त्रपाठक्रमादाग्नेयस्य प्रथमानुष्ठानं पश्चाच्चोपांशुयाजोत्तरमग्नीषोमीयस्य, न तु ब्राह्मणपाठक्रमादग्नीषोमीयस्य प्रथमं, पश्चादुपांशुयाजोत्तरमाग्नेयस्येत्यभिप्रेत्य मन्त्रपाठस्य ब्राह्मणपाठाद्बलीयस्त्वमाह—स चायमित्यादिना। याज्यानुवाक्यानामिति। यजेति प्रैषानन्तरमृग् या ब्रह्मणा समुच्चार्यते सा याज्येत्युच्यते। अनुब्रूहीति प्रैषानन्तरमृग् या तेनैव समुच्चार्यते सानुवाक्येत्युच्यत इत्यर्थः।

तस्य तद्बलीयस्त्वे हेतुमाह—अनुष्ठान इत्यादिना। मन्त्रपाठस्य ब्राह्मणपाठादनुष्ठाने-

**ऽन्तरङ्गत्वमुपपादयति—ब्राह्मणवाक्यमित्यादिना । स्मरणक्रमाधीनत्वादिति । अनुष्ठेय-पदार्थस्मरणक्रमाधीनत्वादित्यर्थः । तत्क्रमस्येति । अनुष्ठेयपदार्थस्मरणक्रमस्येत्यर्थः । मन्त्र-क्रमाधीनत्वादिति । अनुष्ठेयपदार्थस्मारकमन्त्रक्रमाधीनत्वादित्यर्थः । प्रयाजानामनुष्ठानक्रमः 'समिधो जयति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहाकारं यजती'ति ब्राह्मण-पाठक्रमात्स्वीक्रियते इत्याह—प्रयाजानामित्यादिना । ननु 'समिधोऽग्न आज्यस्य व्यन्त्वि'-त्यादिमन्त्राणां प्रयाजक्रमस्मारकाणां सत्त्वेन कथं तेषां ब्राह्मणवाक्यक्रमात्क्रमः स्वीक्रियते, तद्वाक्यानां विधानमात्रे चरितार्थत्वादित्याशयेनाशङ्कते—यद्यपीति । मन्त्रपाठस्यान्यादृश-त्वेन वा, मन्त्राणां देवतामात्रस्मारकत्वेन कर्मस्मारकत्वाभावाद्वा, प्रयाजक्रमो ब्राह्मणपाठ-क्रमादेवेत्याशयेन परिहरति—तथापीति । तथा च येन क्रमेण ब्राह्मणवाक्यान्यधीतानि तेनैव क्रमेणार्थस्मरणं जनयन्तीति युक्तं तेषां तेनैव क्रमेणानुष्ठानमिति भावः । वस्तुतस्तु प्रयाज-क्रमो न ब्राह्मणपाठक्रमात्स्वीक्रियते 'समिधोऽग्न आज्यस्य व्यन्त्वि'त्यादिभिः क्रमप्रकरण-प्राप्तैर्मन्त्रैर्देवता गुणत्वेन समर्प्यन्त इति नवमन्त्ररत्नविरोधप्रसङ्गात् । अन्यथा मन्त्राणाम-न्यादृशक्रमत्वे तदनुपपत्त्यापत्तेः, किं तु मन्त्रपाठक्रमात्क्रम एव, ब्राह्मणपाठक्रमात्क्रमस्तु यत्रार्थस्मारका मन्त्रा न सन्त्येव तेषामेव, यथा तूष्णीं विहितानां कर्मणां क्रमो ब्राह्मण-पाठक्रमाद्भवति तत्र तेषामेव प्रयोगसमवेतार्थस्मारकत्वात् । प्रयाजोदाहरणं तु कृत्वा चिन्तया, तत्र ब्राह्मणवाक्यानां प्रयोगसमवेतार्थस्मारकत्वाभावात् । तथा चार्थवादपादे वार्तिकवचनम् 'प्रयाजादिवाक्यान्यर्थं समर्प्य चरितार्थानि स्वरूपसंस्पर्शे सत्यपि प्रयोज्यतां न प्रतिपद्यन्त' इति, तस्मान्मन्त्रक्रमादेव प्रयाजक्रम इति सिद्धमिति ध्येयम् ।**

यहाँ का अधिकांश विषय स्पष्ट है। मन्त्रपाठ का अर्थ है क्रमशः पढ़े गये संहिता मन्त्र और ब्राह्मणपाठ का अर्थ है क्रमशः ब्राह्मणग्रन्थों में उल्लिखित वाक्य। मन्त्रपाठ ब्राह्मणपाठ की अपेक्षा बलवान् कहा जाता है। इसी से मन्त्र और ब्राह्मण दोनों स्थानों पर उल्लिखित यागों में व्यतिक्रम होने पर मन्त्रपाठ के अनुसार ही क्रम निर्धारित किया जाता है। यह पहले प्रसङ्गों में स्पष्ट किया जा चुका है कि याज्या और आनुवाक्या ऋग्वेद के मन्त्रविशेष हैं। जिस क्रम से यागों का मन्त्र में उल्लेख होता है उसी क्रम में याज्या और अनुवाक्या भी होते हैं। ऋग्वेद में होतृकाण्ड में आज्यभाग मन्त्रानुवाक के परवर्ती अनुवाक में पहले 'अग्निर्मूर्धा' इत्यादि मन्त्र से आग्नेय याज्यानु-वाक्या कहे गये हैं, उसके बाद 'प्रजापते न त्वदेतानि' इत्यादि में प्राजापत्य याज्यानुवाक्या हैं। उसके भी बाद में 'अग्नीषोमास वेदसे' इत्यादि याज्यानुवाक्या हैं। इसी प्रकार आध्वर्यव तथा याजमानकाण्डों में भी पहले आग्नेय और बाद में अग्नीषोमीय याज्यानुवाक्याओं का उल्लेख है। संहिता में यही क्रम होने के कारण तैत्तिरीय ब्राह्मण के पञ्चमप्रपाठक के द्वितीय अनुवाक में अग्नी-षोमीययाग का उल्लेख "ताभ्यां अग्नीषोमीयम् एकादशकपालं पौर्णमासे प्रायच्छत्" आदि शब्दों में किया गया है और आग्नेययाग का उसी ब्राह्मण के षष्ठप्रपाठक के तृतीय अनुवाक में "यथाग्नेयाष्टाक-पालो अमावास्यायां पौर्णमास्याञ्चाच्युतो भवति" आदि शब्दों में, फिर भी मन्त्रपाठ के क्रम के कारण आग्नेय को पहले और अग्नीषोमीय को बाद में अनुष्ठित किया जाता है।

मन्त्रपाठ इसलिये अन्तरङ्ग है क्योंकि कर्म का अनुष्ठान करते समय भी उसका उच्चारण होता है और ब्राह्मणपाठ की बहिरङ्गता इसलिये है क्योंकि उनका कार्य अनुष्ठान से पहले ही समाप्त हो जाता है। ऐसा संभव नहीं है कि मन्त्रों के विना भी काम चले क्योंकि यह नियम है कि मन्त्रों से ही देवता का स्मरण करना चाहिये—"मन्त्रैरेव स्मर्तव्यम्"। स्मरण और अनुष्ठान में एक विशिष्ट सम्बन्ध है जो इस प्रकार है—

लभ्यतेऽर्थस्मृतिर्दृष्टा मन्त्रोच्चारणतस्त्विह ।
अर्थस्मृतिः प्रयोगार्था प्रयोगाच्च फलोदयः ॥

प्रयाजों में विहित अनुष्ठानों का क्रम ब्राह्मणपाठ पर ही आश्रित होता है क्योंकि उनका विधान ब्राह्मणों में ही पाया जाता है ।

## स्थानलक्षणम्

**( ४१ ) स्थानं नामोपस्थितिः । यस्य हि देशे योऽनुष्ठीयते तत्पूर्वतने पदार्थे कृते स एव प्रथममुपस्थितो भवतीति युक्तं तस्य प्रथममनुष्ठानम् । अत एव साद्यस्के अग्नीषोमीय–सवनीया–नुबन्ध्यानां सवनीयदेशे सहानुष्ठाने कर्तव्ये आदौ सवनीयपशोरनुष्ठानमितरयोः पश्चात् । तस्मिन्देशे आश्विनग्रहणानन्तरं सवनीयस्यैव प्रथममुपस्थितिः ।**

**तथा हि ज्योतिष्टोमे त्रयः पशुयागाः–अग्नीषोमोयः सवनीय आनुबन्ध्यश्चेति । ते च भिन्नदेशाः–अग्नीषोमीय औपवसथ्येऽह्नि, सवनीयः सुत्याकाले, आनुबन्ध्यस्त्वन्ते । साद्यस्क्रो नाम ( सोम ) यागविशेषः । स चाव्यक्तत्वाज्ज्योतिष्टोमविकारः । अतस्ते त्रयोऽपि पशुयागाः साद्यस्के चोदकप्राप्ताः । तेषां च तत्र ( हि ) साहित्यं श्रुतं 'सह पशूनालभेत' इति । तच्च साहित्यं सवनीयदेशे, तस्य प्रधानप्रत्यासत्तेः, स्थानातिक्रमसाम्याच्च ।**

**सवनीयदेशे ह्यनुष्ठानेऽग्नीषोमीयानुबन्ध्ययोः स्वस्वस्थानातिक्रमो भवति[1] । अग्नीषोमीयदेशेऽनुबन्ध्यदेशे वा अनुष्ठाने त्रयाणामपि स्वस्वस्थानातिक्रमः । तथा च—**

**प्रकृतौ–"आश्विनग्रहं कृत्वा त्रिवृता यूपं परिवीय आग्नेयं सवनीयपशुमुपाकरोती"त्याश्विनग्रहणानन्तरं सवनीयो विहित इति साद्यस्केऽप्याश्विनग्रहणे कृते सवनीय एवोपस्थितो भवति । अतो युक्तं तस्य स्थानात्प्रथममनुष्ठानमितरयोस्तु पश्चादित्युक्तम् ।**

स्थान का अर्थ है उपस्थित होना ।[2] जिसके स्थान पर जिसका सम्पादन किया जाता है उससे पूर्ववर्ती कर्म को सम्पन्न करने पर वही पहले उपस्थित होता है इसलिये उसी का पहले सम्पादन उचित है । इसी से साद्यस्क्र याग में अग्नीषोमीय, सवनीय और आनुबन्ध्य का सवनीय के अवसर पर एक साथ अनुष्ठान करणीय होने पर सर्वप्रथम सवनीयपशु का अनुष्ठान होगा, अन्य दोनों का बाद में । ( क्योंकि ) उस स्थान पर आश्विनग्रहण के पश्चात् सवनीय की ही प्रथम प्राप्ति होती है ।

जैसे कि 'ज्योतिष्टोम' में तीन पशुयाग किये जाते हैं—१–अग्नीषोमीय २–सवनीय और

---

१. अग्नीषोमीयदेशे त्वनुष्ठाने सवनीयस्य स्वस्थानातिक्रममात्रम्, अनुबन्ध्यस्य तु स्वस्थानातिक्रमः सवनीयस्थानातिक्रमश्च स्यात् । एवमनुबन्ध्यदेशेऽग्नीषोमीयस्य द्रष्टव्यः स्थानातिक्रमः । तथा च सवनीयदेशे सर्वेषामनुष्ठाने कर्त्तव्ये सवनीयस्य प्रथममनुष्ठानम् । आश्विनग्रहणानन्तरं हि सवनीयदेशः । पाठा० ।

२. उपस्थितिः कर्त्तव्यताज्ञानम्–प्रतिपादिका पृ० ८९.

३–आनुबन्ध्य। और ये तीनों पृथक्-पृथक् अवसरों पर किये जाते हैं—अग्नीषोमीय औपवसथ्य दिन, सवनीय सुत्याकाल और अनुबन्ध्य तो अन्तिम दिन ( अवभृथ दिन )। साद्यस्क्र एक विशेष याग है, जो ( देवता, द्रव्य आदि के ) अव्यक्त–अनिर्दिष्ट–होने के कारण ज्योतिष्टोम का विकार है। इसलिये वे तीनों ही पशुयाग साद्यस्क्र याग में अतिदेश से प्राप्त होते हैं। 'पशुओं का एक साथ आलम्भन करे'—'सह पशूनालभेत'—इस मन्त्र से उन पशुओं का एक साथ सम्पादन–साहित्य–निर्दिष्ट है। वह साहित्य सवनीय देश में ही ( अनुष्ठान से ) संभव होता है, क्योंकि ( ऐसा करने पर ही ) वह साहित्य प्रधान कर्म के अतीव समीप हो पाता है और स्थान के अतिक्रमण में भी समानता होती है। सवनीयदेश में अनुष्ठान करने पर अग्नीषोमीय और अनुबन्ध्य दोनों का अपने-अपने ही स्थानों का अतिक्रमण–उल्लंघन–होता है, किन्तु अग्नीषोमीय के स्थान पर अथवा अनुबन्ध्य देश पर अनुष्ठान करने से तीनों का भी अपने-अपने स्थान का अतिक्रमण होता है। जैसे कि—प्रकृति-याग में—'आश्विनग्रहं गृहीत्वा०'—आश्विन का ग्रहण करके तीन आवरणों से यूप को आवृत करके अग्निदेवताक सवनीयपशु को उपस्थित करे' इस ( मन्त्र के ) अनुसार आश्विनग्रहण के पश्चात् सवनीय का ही विधान है। अतः साद्यस्क्र में भी आश्विनग्रहण के पश्चात् सवनीय ही विहित है, इसलिये साद्यस्क्र में भी आश्विनग्रहण करने पर सवनीय ही उपस्थित होता है। इससे स्थानप्रमाण के आधार पर इसका ( सवनीय का ) ही पहले सम्पादन उचित है, अन्य दोनों का बाद में, ऐसा मीमांसासूत्र ( ५।१।१३ ) में स्पष्ट किया गया है।

**इदानीं स्थानं लक्षयति**—स्थानं नामोपस्थितिरिति। **प्रकृतौ नानादेशानां पदार्थानां विकृतौ चोदकवचनादेकस्मिन्देशेऽनुष्ठाने कर्तव्ये यस्य देशे तेऽनुष्ठीयन्ते तस्य प्रथममनुष्ठान-मितरयोस्तु पश्चादयं यः क्रमः स स्थानक्रमः। तेन चोपस्थितिविशेषेण योऽनुष्ठानक्रमः स एव स्थानक्रम इत्युच्यत इति भावः। उपस्थितिं व्यनक्ति**—यस्येत्यादिना। यस्येति। **ज्योतिष्टोमादिप्रकृतेः साद्यस्क्रादिविकृतौ चोदकप्राप्तस्य सवनीयादेरित्यर्थः।** य इति। **आग्नीषोमीयानुबन्ध्यादिरित्यर्थः।** तत्पूर्वतन इति। **तस्मात्सवनीयादेः पूर्वतन आश्विन-ग्रहणादौ पदार्थे कृते सतीत्यर्थः।** स एवेति। **सवनीयादिरेवेत्यर्थः।** प्रथममिति। **अग्नीषो-मीयानुबन्ध्यापेक्षया प्रथममित्यर्थः।** तस्येति। **सवनीयादेरेवेत्यर्थः।** अत एवेति। **प्रथमो-पस्थितप्रथमानुष्ठानस्य युक्तत्वादेवेत्यर्थः।** इतरयोरिति। **अग्नीषोमीयानुबन्ध्ययोरित्यर्थः।** तस्मिन्देश इति। **त्रयाणामपि पशूनां विकृतौ प्राप्तसवनीयदेश इत्यर्थः।** आश्विनग्रहणानन्तर-मित्यत्र **सवनीयस्यैव विकृतौ प्रधानप्रत्यासत्तिबलाच्चोदकप्राप्तत्वेनोपस्थितियोग्यत्वादिति शेषः।** प्रथममिति। **अग्नीषोमीयानुबन्ध्यापेक्षया प्रथममित्यर्थः।**

**विकृतावाश्विनग्रहणानन्तरमेव सवनीयस्थानप्रदर्शनाय प्रथमं प्रकृतौ तत्स्थानं प्रदर्श-यति**—तथा हीत्यादिना। **औपवसथ्येऽह्नीत्युक्तार्थ एव।** अन्त इति। **अवभृथादूर्ध्वकाल इत्यर्थः।** अव्यक्तत्वादिति। **स्वार्थचोदितदेवतारहितत्वादित्यर्थः। तदुक्तं न्यायप्रकाशे 'अव्यक्तत्वं च स्वार्थचोदितदेवताराहित्य'मिति।** अत इति। **ज्योतिष्टोमविकारत्वादित्यर्थः।** तत्रेति। **साद्यस्क्र इत्यर्थः।** तच्चेति। **श्रुतं चेत्यर्थः।** तस्येति। **सवनीयस्येत्यर्थः।** प्रधा-नेति। **यथा प्रकृतिभूते ज्योतिष्टोमे सुत्याकालिकः सवनीयः प्रधानप्रत्यासन्नस्तथैव तद्वि-कृतिविशेषे साद्यस्क्रेऽपि तात्कालिकः स प्रधानप्रत्यासन्न एवेति भावः। सवनीयदेशे साहित्ये त्रयाणां स्वस्वस्थानातिक्रमसाम्यं हेत्वन्तरमाह**—स्थानेति।

तदेव स्वस्वस्थानातिक्रमसाम्यं प्रदर्शयति—सवनीयदेश इत्यारभ्य तथा चेति प्राक्तनेन ग्रन्थेन। स्वस्वस्थानातिक्रमो भवतीति। यथा प्रकृतौ तथैव विकृतावपि चोदकप्राप्तस्याग्नीषोमीयस्यौपवसथ्याहोरूपस्य स्वस्थानमात्रस्यातिक्रमो भवत्यानुबन्ध्यस्य च स्वान्तस्थानमात्रस्यातिक्रमो भवतीत्यर्थः। सवनीयस्य तु सुत्याकालरूपस्वस्थानस्य नातिक्रमो भवतीत्यत्र लाघवमिति भावः। इति त्रयाणां स्वस्वस्थानातिक्रम इति। अग्नीषोमीयस्य देश औपवसथ्येऽह्नि सर्वेषामनुष्ठानेऽग्नीषोमीयस्य सवनीयप्रधानसोमप्रत्यासत्तिबलात्साहित्यविधिप्राप्तसुत्याकालरूपसवनीयस्थानरूपस्वस्थानातिक्रमो भवति। आनुबन्ध्यस्य तु तादृशसवनीयस्थानरूपस्वस्थानातिक्रमः स्वीयान्तस्थानातिक्रमो भवतीति त्रयाणां स्वस्वस्थानातिक्रमः। आनुबन्ध्यस्य देशे तु तेषामनुष्ठानेऽग्नीषोमीयस्यौपवसथ्याहोरूपस्य स्वस्थानस्यातिक्रमस्तादृशसवनीयस्थानरूपस्वस्थानस्यातिक्रमश्च भवति, आनुबन्ध्यस्य तु निरुक्तसवनीयस्थानरूपस्वस्थानस्यातिक्रमः, सवनीयस्य तु स्वस्थानमात्रस्यातिक्रमश्च भवतीति त्रयाणां स्वस्वस्थानस्यातिक्रम इत्यर्थ। तथा चेति। उपयुक्त्या सवनीयदेशे त्रयाणामनुष्ठाने कर्तव्ये चेत्यर्थः।

वैकृतसवनीयस्थाननिर्णयोपायतया प्राकृतं सवनीयस्थानं श्रुत्या प्रदर्शयति—प्रकृतावित्यादिना। त्रिवृता त्रिगुणितरज्ज्वा परिवीय परिवेष्टनं कृत्वा आश्विनः सोमग्रहः तद्ग्रहणानन्तरं ज्योतिष्टोमे सवनीयो विहित इति भावः। इति। यतः प्रकृतावाश्विनग्रहणानन्तरं स विहितोऽतो हेतोरित्यर्थः। आश्विनग्रहणेति। अत्राप्याश्विनग्रहणानन्तरमेव तस्य चोदकप्राप्तत्वेन तदनन्तरमेव तदुपस्थितिरिति भावः। तस्येति। सवनीयस्येत्यर्थः। स्थानादिति उपस्थितेरित्यर्थः। इतरयोरिति। अग्नीषोमीयानुबन्ध्ययोरित्यर्थः। ननु तयोः पश्चादनुष्ठानेऽपि कस्य प्रथममनुष्ठाने कस्य पश्चादित्यनिर्णये प्रयोगविक्षेपापत्तिरित्यत आह—उक्तमिति। पञ्चमाध्यायस्य प्रथमे पाद इति शेषः। तत्र हि स्थानात्सवनीयस्य प्राथम्ये निश्चिते स्थानभ्रष्टयोस्तयोरग्नीषोमीयस्य प्रथममनुष्ठानमानुबन्ध्यस्य पश्चादित्युक्तमित्यर्थः। उक्तं हि न्यायमालाविस्तरे—साद्यस्क्रनामकः कश्चित्सोमयागः तत्र श्रूयते सहपशूनालभेत इति। प्रकृतावग्नीषोमीयपशुरौपवसथ्ये दिने आलभ्यते, सवनीयपशुः सुत्यादिने प्रातःसवन आश्विनग्रहादूर्ध्वमालभ्यते, आनुबन्ध्यः पशुरवभृथादूर्ध्वमालभ्यते इह तु त्रयोऽपि पशवः सहालब्धव्याः, सोऽयं सहालम्भः सुत्यादिन आश्विनग्रहादूर्ध्वं सवनीयस्थाने भवतीत्येतदवश्यमभ्युपेतव्यं, तथा सति प्रधानसोमप्रत्यासत्तिलाभादिति। सवनीयो हि स्वस्थान एव वर्तते, आश्विनग्रहसमीपस्य सवनीयस्थानत्वात्। आश्विने गृहीते सति सवनीय एव बुद्धिस्थो भवति, प्रकृतौ तदानन्तर्यस्य क्लृप्तत्वात्। ततः सवनीयस्य प्राथम्ये स्थानान्निश्चिते सति स्थानभ्रष्टयोरग्नीषोमीयानुबन्ध्ययोः प्रकृताविव पूर्वोत्तरभावो द्रष्टव्य इति। यद्वा। उक्तमिति। आदौ सवनीयपशोरनुष्ठानमितरयोः पश्चादित्यत्र पूर्वत्रोक्तमित्यर्थः।

मूल में प्रथम दो वाक्य अस्पष्ट-से हैं। सर्वप्रथम तो 'स्थान' के लक्षण के स्थान पर उसका पर्यायवाचक शब्द रखा गया है—'उपस्थितिः'। यह स्वयं में बहुत स्पष्ट नहीं है। उपस्थिति का अर्थ है 'विद्यमान होना'। वर्तमान सन्दर्भ में इसका अर्थ हुआ कर्त्तव्यकर्म के रूप में प्राप्त अथवा ज्ञात होना।' 'यस्य हि देशे०' आदि वाक्य अनिश्चयवाचक 'यः' 'यस्य' आदि के प्रयोग के कारण अस्पष्ट है और किसी कथन का पोषक लगता है जब कि वास्तविक कथन का यहाँ उल्लेख ही

नहीं है। भास्कर ने 'मीमांसान्यायप्रकाश' से इन शब्दों का संक्षेप में ग्रहण किया है, किन्तु संक्षेपीकरण में जितना अंश छोड़ दिया है उसकी छूट से ही समझने में कठिनाई हो रही है। आपदेव के शब्द 'मीमांसान्यायप्रकाश' में इस प्रकार हैं—'प्रकृतौ नानादेशस्थानां पदार्थानां विकृतौ वचनाद् एकस्मिन् देशेऽनुष्ठाने कर्त्तव्ये यस्य देशेऽनुष्ठीयन्ते तस्य प्रथममनुष्ठानम् इतरयोश्च पश्चात्-अयं यः क्रमः स स्थानक्रमः। स्थानं नामोपस्थितिः। यस्य हि देशे···प्रथममनुष्ठानम्।[1]

मीमांसान्यायप्रकाश की उक्त पंक्तियों से स्पष्ट होता है कि 'स्थानप्रमाण' से क्रम का निर्धारण विकृतियागों में होता है, प्रकृतियागों में उसकी आवश्यकता नहीं पड़ती। विकृतियागों में भी सदा इसकी आवश्यकता नहीं पड़ती। उसकी अपेक्षा तभी होती है जब प्रकृतियाग में कई दिनों में अनुष्ठान की अपेक्षा वाले कर्मों को विकृति में एक ही दिन में सम्पन्न करना पड़ता है। ऐसी दशा में यह निर्धारण अनिवार्य हो जाता है कि अनेक दिनों में सम्पाद्य कर्मों को एक ही दिन में सम्पन्न करते समय किसको पहले किया जाये और किसको बाद में। 'स्थान-प्रमाण' से ही यह निश्चित होता है कि जिसके स्थान पर ( उसके सदृश ) जो कर्म अनुष्ठित होता है उसी को उस स्थान पर प्रथमतः सम्पन्न किया जाता है। उदाहरण के लिये साद्यस्क्र-याग को लिया गया है। साद्यस्क्र एक विकृति सोमयाग है जिसकी प्रकृति ज्योतिष्टोमयाग है। ज्योतिष्टोम में अग्नीषोमीयपशु का आलम्भन प्रथम औपवसथ्यदिन, सवनीय का द्वितीय सुत्याकाल नामक दिन में और अनुबन्ध्य का तृतीय अथवा अन्तिम अवभृथ के दिन। साद्यस्क्र नामक सोमयाग ज्योतिष्टोम का विकृतियाग है, यह स्पष्ट किया गया है। ज्योतिष्टोम की विकृति इसे इसलिये माना जाता है क्योंकि यह सोम-याग है और सोमयाग ज्योतिष्टोम से सम्बद्ध है। दूसरी बात यह है कि साद्यस्क्र अव्यक्तयाग है—अर्थात् इसके स्वरूप का पृथक् से प्रकटन करने वाले तत्त्व द्रव्य, देवता आदि का कथन नहीं है। अतः जहाँ 'प्रकृतिवद् विकृतिः कर्त्तव्या' इस अतिदेशवाक्य से प्रकृति की अन्य क्रियायें प्राप्त थीं, वहीं द्रव्यदेवता आदि के लिये भी यह उसी पर आश्रित हो गया। 'साद्यस्क्र' एक दिन में सम्पन्न होने वाला याग है जिसमें प्रकृति के अग्निषोमीय, सवनीय तथा अनुबन्ध्य पशुओं का आलम्भन भी होना है। अब समस्या यह है कि तीनों दिनों में से किस दिन तीनों पशुओं का आलम्भन किया जाये। इसके लिये 'सुत्याकाल' अथवा 'सवनीयदेश' ही निश्चित किया जाता है। औपवसथ्य अथवा अवभृथ दिनों में इसका सम्पादन नहीं हो सकता। सवनीयदेश में कर्म सम्पादन के दो कारण हैं—( १ ) प्रधानप्रत्यासत्ति और ( २ ) स्थानातिक्रमसाम्य। मुख्यक्रिया से निकट होना प्रधानप्रत्यासत्ति है। सोमयाग साद्यस्क्र[2] में सोम का निचोड़ना मुख्य क्रिया है। यह स्पष्ट ही हो चुका है कि ज्योतिष्टोम में सोम को द्वितीय दिन सुत्याकाल में निचोड़ा जाता है और सवनीय-पशु का आलम्भन होता है। इसलिये सवनीयदिन प्रधानकर्म सोमसवन से अधिक निकट है। साद्यस्क्र में भी सुत्याकाल में ही सोमसवन और पशुत्रयालम्भन होगा, अतः प्रधान सोमयाग के साथ ही किये जाने से दोनों से निकटता होगी। कृष्णनाथ भट्टाचार्य के अनुसार 'प्रधान-प्रत्यासत्ति' का अर्थ प्रधानयाग से सन्निधि और प्रधानद्रव्यसोम से सान्निध्य दोनों हो सकता है।[3]

---

१. मीमांसान्यायप्रकाश पृ० २२९.

२. साद्यस्क्रयाग सद्यः+क्री से निष्पन्न है जिसका अर्थ है "साद्यस्क्रो नाम सद्यः सोमक्रय-विशिष्टः सोमयागविशेषः।' इसके अतिरिक्त इसमें उसी एक दिन सारी क्रियायें बड़ी जल्दी-जल्दी में होती हैं। 'सद्यो दीक्षयन्ति' 'सद्यः सोमं क्रीणन्ति' इत्यादि श्रुत्युक्तप्रकारेण सर्वमङ्गजातं यत्र सद्य एवानुष्ठीयते स एकदिनानुष्ठेयो यागविशेषः साद्यस्क्रशब्दवाच्यः।' Karmarkar : The Arthasamgraha p. 188. द्रष्टव्य जै० न्या० मा० वि० पृ० २६८।

३. प्रधानप्रत्यासत्तेः प्रधानस्य यागस्य सान्निध्यात्। प्रधानद्रव्यसोमसान्निध्याच्च। प्रतिपादिका पृ० ९०.

सवनीयदेश में पशुत्रयालम्भन करने से दूसरा लाभ होगा 'स्थानातिक्रमसाम्य' का। अर्थात् सवनीयदेश मध्य का दिन है, इसलिये उस दिन अनुष्ठान करने पर अग्नीषोमीय, सवनीय और अनुबन्ध्य के मध्य में विहित सवनीयपशु का आलम्भन अपने ही स्थान पर हो जायेगा, उसे अपनी जगह छोड़कर अन्यत्र खिसकने की जरूरत नहीं पड़ेगी। अग्नीषोमीय को अपनी जगह छोड़कर केवल थोड़ा सा आगे बढ़ना पड़ेगा और अनुबन्ध्य को भी अपना स्थान छोड़कर उतना ही पहले खिसकना पड़ेगा। इस प्रकार प्रथम तथा तृतीय को ही केवल अपना-अपना स्थान छोड़ना पड़ेगा और दोनों को मध्यवर्ती द्वितीय के पास पहुँचने में बराबर ही दूरी तय करनी पड़ेगी। यदि सवनीय-देश में इनका आलम्भन न करके अग्नीषोमीयदेश में किया गया तो अग्नीषोमीय तो अपने स्थान से नहीं खिसकेगा किन्तु मध्यवर्ती सवनीय को अपने स्थान से ऊपर अतिक्रमण करना पड़ेगा और अनुबन्ध्य को अपने स्थान का तो करना ही पड़ेगा, अग्नीषोमीय तक पहुँचने के लिये मध्यवर्ती सवनीय का भी अतिक्रमण करना पड़ेगा। इस प्रकार अनुबन्ध्य को सवनीय की अपेक्षा दुगनी दूरी तय करनी पड़ेगी। जब समान दूरी तय करने से काम सिद्ध हो जाता हैं, तब असमानता आना अनुचित है। यही दशा अवभृथस्थान पर पश्वालम्भन करने पर होगी, अर्थात् अनुबन्ध्य को कोई अतिक्रमण नहीं करना पड़ेगा, सवनीय को अपना स्थान लांघना पड़ेगा और अग्नीषोमीय को अपना स्थान तो छोड़ना ही पड़ेगा, सवनीय का भी उल्लंघन करना पड़ेगा। इन तीनों स्थानों के आलम्भनों को रेखाचित्र से इस प्रकार स्पष्ट किया जा सकता है—




यह निश्चित हो जाने पर कि किस देश में पशुत्रयालम्भन होगा, अब तीनों में किसका आल-म्भन पहले हो और किनका बाद-बाद में यह प्रश्न रह जाता है। इसके लिये ही 'तथा च सवनीय-देशे०' आदि कहा गया है जिसका अभिप्राय यह है कि प्रकृतियाग में 'आश्विनग्रहं०' आदि मन्त्र के द्वारा आश्विनग्रहण के पश्चात् सवनीयपशु के उपाकरण की बात कही गयी है, अतः साद्यस्क में भी आश्विनग्रहण के बाद सवनीयपशु की ही प्राप्ति होती है। यही क्रमप्राप्ति उपस्थिति है जिसके निर्धारण के लिये 'स्थानप्रमाण' की आवश्यकता है। अतः सवनीयपशु का आलम्भन प्रथमतः होने के बाद क्रम से बचे अग्नीषोमीय और अनुबन्ध्य का आलम्भन इसी क्रम में होगा। इस विषय का स्पष्टीकरण मीमांसासूत्र में ( ५।१।१३ ) जैमिनि ने तथा शबर ने अपने भाष्य आदि में किया है।

## मुख्यक्रमः

**( ४२ ) प्रधानक्रमेण योऽङ्गानां क्रमः स मुख्यक्रमः। येन हि क्रमेण प्रधानानि क्रियन्ते तेनैव क्रमेण तेषामङ्गान्यनुष्ठीयन्ते चेत् तदा सर्वेषामङ्गानां स्वैः स्वैः प्रधानैस्तुल्यं व्यवधानं भवति। व्युत्क्रमेणानुष्ठाने केषांचिदङ्गानां स्वैः प्रधानैरत्यन्तमव्यवधानं केषांचिदत्यन्तं व्यवधानं स्यात्, तच्चायुक्तं, प्रयोगविध्यवगत-साहित्यबाधापत्तेः। अतः प्रधानक्रमोऽप्यङ्गक्रमे हेतुः। अत एव प्रयाजशेषेणा-**

**दावाग्नेयहविषोऽभिघारणं पश्चादैन्द्रस्य दध्नः, आग्नेयैन्द्रयागयोः पौर्वापर्यात्। एवं च द्वयोरभिघारणयोः स्वस्वप्रधानेन तुल्यमेकान्तरितं व्यवधानं, व्युत्क्रमेणाधारे त्वाग्नेयहविरभिघारणाग्नेययागयोरत्यन्तमव्यवधानम्, ऐन्द्रदध्यभिघारणैन्द्रयागयोर्द्व्यन्तरितं व्यवधानं तच्चायुक्तमित्युक्तमेव।**

**स च मुख्यक्रमः पाठक्रमाद् दुर्बलः। मुख्यक्रमो हि प्रमाणान्तरसापेक्षप्रधानक्रमप्रतिपत्तिसापेक्षतया विलम्बितप्रतिपत्तिकः। पाठक्रमस्तु निरपेक्षस्वाध्यायपाठक्रममात्रसापेक्षतया न तथेति बलवान्। स चायं मुख्यक्रमः प्रवृत्तिक्रमाद् बलवान्। प्रवृत्तिक्रमे हि बहूनामङ्गानां प्रधानविप्रकर्षात्, मुख्यक्रमे तु संनिकर्षात्।**

प्रधानयाग के क्रम से जो अङ्गों का क्रम होता है वह मुख्य क्रम है। जिस क्रम से प्रधान कर्म किये जाते हैं उसी क्रम से यदि उनके अङ्गों का अनुष्ठान किया जाये तो सभी अङ्गों की अपने-अपने प्रधानों से समान दूरी होगी। विपरीत क्रम से अनुष्ठान करने पर कुछ अङ्गों का अपने प्रधानों से बहुत अधिक सामीप्य हो जायेगा और कुछ का बहुत अधिक व्यवधान। यह उचित नहीं है क्योंकि प्रयोगविधि से जिस सामीप्य का ज्ञान होना चाहिये उसी का बाध होने लगेगा। इसलिये प्रधानक्रम भी अङ्गक्रम में निमित्त होता है। इसी से प्रयाज के अन्त में पहले अग्निविषयक हवि का अभिघारण होता हैं और बाद में इन्द्रविषयक दधि का, क्योंकि आग्नेय और ऐन्द्र इन दोनों यागों में पौर्वापर्य है। ऐसा करने से दोनों अभिघारणों का अपने-अपने प्रधान से बराबर का एक-एक का ही बीच में अन्तर पड़ता है, जब कि विपरीत क्रम से अभिघारण करने पर आग्नेय हवि के अभिघारण और आग्नेययाग में अत्यन्त निकटता हो जायेगी, और ऐन्द्रदधि के अभिघारण तथा ऐन्द्रयाग के बीच से दो के अन्तर की दूरी पड़ती है। इस प्रकार का असमान अन्तर अनुचित है, यह ( स्थानक्रम के प्रसङ्ग में अन्त में ) कहा ही गया है।

यह मुख्यक्रम पाठक्रम से दुर्बल है। क्योंकि मुख्यक्रम को दूसरे प्रमाण पर आश्रित प्रधान क्रम के ज्ञान की आवश्यकता पड़ने से क्रम का ज्ञान विलम्ब से होता है। पाठक्रम तो प्रमाणान्तर की अपेक्षा न रखने वाले स्वाध्याय पाठक्रम पर आश्रित रहने के कारण वैसा ( अर्थात् विलम्ब से ज्ञापक ) नहीं होता है, अतः ( मुख्यक्रम से ) प्रबल होता है। यह मुख्यक्रम प्रवृत्तिक्रम से प्रबल है क्योंकि प्रवृत्तिक्रम में बहुत से अङ्ग प्रधान से दूर पड़ते हैं, जब कि मुख्यक्रम में निकट।

अथ मुख्यक्रमं लक्षयति—प्रधानक्रमेणेति। तेनैव क्रमेणेत्यत्र यदेति शेषस्तदेत्यनुरोधात्। यत्र ह्यनेकेषां साङ्गानां प्रधानानां सहकर्तव्यता तत्र प्रयोगविधिनाङ्गप्रधानयोः साहित्यावगतावपि प्रधानान्तरसाहित्यानुरोधेन यावदनुज्ञातव्यवधानस्वीकारेऽपि तदधिकव्यवधाने प्रमाणाभावात् प्रधानप्रत्यासत्त्यनुग्रहाय मुख्यक्रमेणैवाङ्गक्रमनियमः। अत एव प्रवृत्तौ अङ्गनिरूपितप्रत्यासत्त्यनुग्रहो बीजं, मुख्यक्रमे तु प्रधाननिरूपितप्रत्यासत्त्यनुग्रहो बीजमिति तयोर्भेद इति भावः। प्रधानक्रमव्युत्क्रमेणाङ्गानुष्ठाने बाधकमाह—व्युत्क्रमेणेत्यादिना। तत्रापीष्टापत्तिमाशङ्क्य प्रयोगविध्यवगततत्साहित्यबाधापत्तिरूपमनिष्टं बाधकमाह—तच्चायुक्तमिति। केषांचिदङ्गानां तैरत्यन्तमव्यवधानं केषांचिदत्यन्तव्यवधानं चेति शेषः। अभिघारणमिति। क्षरद्घृतेनाभिषेक इत्यर्थः। एवं चेति। मुख्यक्रमेण हविरभिघारणरूपाङ्गक्रमे चेत्यर्थः। एकान्तरितं व्यवधानमिति। आग्नेयहविरभिघारणाग्नेय-

यागयोरैन्द्रहविरभिघारणेन व्यवधानादैन्द्रहविरभिघारणैन्द्रयागयोश्चाग्नेययागेन व्यवधानादित्येकान्तरितं व्यवधानमित्यर्थः। तथा चादावाग्नेयहविरभिघारणं, तत ऐन्द्रस्य हविषोऽभिघारणं, तत आग्नेययागः, ततश्चैन्द्रयाग इत्येव क्रमो मुख्यक्रमात्सिद्धो भवतीति भावः। यदि त्वादावैन्द्रहविषोऽभिघारणं तत आग्नेयहविषस्तत्क्रियते ततश्च याज्यानुवाक्याक्रमवशादाग्नेययागस्यानुष्ठानं तत ऐन्द्रयागस्यानुष्ठानमिति क्रमः स्वीक्रियते तदा कस्यचिदत्यन्तमव्यवधानं कस्यचिदत्यन्तव्यवधानं च स्यात्, तच्चायुक्तं, प्रयोगविध्यवगततत्साहित्यबाधापत्तेरित्यभिप्रेत्याह—व्युत्क्रमेणेत्यादिना। उक्तमेवेति। 'तच्चायुक्तं प्रयोगे' त्यादौ दूषणमुक्तमेवेत्यर्थः।

इदानीं पाठक्रमान्मुख्यक्रमस्य दौर्बल्यमाह—स चेति। तत्र हेतुमाह—मुख्यक्रमो हीति। यतो मुख्यक्रमः प्रमाणान्तरसापेक्षा या प्रधानक्रमस्य प्रतिपत्तिस्तत्सापेक्षत्वेन विलम्बितप्रतिपत्तिकोऽतः पाठक्रमाद्दुर्बल एवेत्यर्थः। किंच निरपेक्षो यः स्वाध्यायपाठक्रमस्तन्मात्रसापेक्षत्वेन यतो न दुर्बलः पाठक्रमोऽतो बलवानिति पाठक्रमस्य ततो वैषम्यमाह—पाठक्रमस्त्विति। अत्रेदं बोध्यम्—दर्शपूर्णमासयोरुपांशुयाजोऽग्नीषोमीयश्चेत्येतदुभयं पौर्णमास्यामाम्नातम्। अत्रोपांशुयाजस्याज्यं द्रव्यम्, आज्यस्य धर्मा उत्पवनचतुर्गृहीतत्वादयः, अग्नीषोमीयस्य पुराडाशो द्रव्यं, तस्य धर्मा निर्वापावघातादयः, तत्र चायं पूर्वपक्षः—मुख्यौ यागावुपांशुयाजाग्नीषोमीयौ पूर्वोत्तरभाविनौ भवतः, तथा च सति अङ्गक्रमस्य प्रधानक्रमेणैवाश्रयणीयत्वात्प्रथमाज्यधर्माणामेवानुष्ठानं न निर्वापादीनामिति। तत्र सिद्धान्तः—औषधधर्मा निर्वापादयः पूर्वमाम्नाताः। आज्यधर्मास्तु पश्चात्। तत्र मुख्यक्रमप्रयुक्तमाज्यधर्माणां प्राथम्यं बाधित्वा पाठक्रमानुरोधेनौषधधर्मा एव प्रथमतोऽनुष्ठेयाः, पाठक्रमो हि वैदिकैः शब्दैः सहसा प्रतीयते, मुख्यक्रमानुसारी तु क्रम उपपत्त्या कल्पनीयः। तस्मादग्नीषोमीयपुरोडाशार्था औषधधर्माः प्रथममनुष्ठेया आज्यधर्मास्तु पश्चादिति। प्रवृत्तिक्रमापेक्षया तु मुख्यक्रमस्य प्राबल्यमेवेत्याह—प्रवृत्तीति। तत्र हेतुमाह—प्रवृत्तिक्रमे हीति। अत्रेदं बोध्यम्—दर्शपूर्णमासयोरादावाग्नेययागस्यानुष्ठानं, ततः सांनाय्ययागस्य, सांनाय्यधर्माश्च केचिद्वत्सापाकरणदोहनादयः पूर्वमेवानुष्ठीयन्ते, तत्र यदि प्रवृत्तिक्रममाश्रित्य सांनाय्यधर्मा अवदानाभिघारणहविरासादनादयोऽपि सर्वे पूर्वमेवानुष्ठीयेरन् तत आग्नेयधर्मा अवदानादयस्तदनुष्ठानं च, ततः सांनाय्ययागानुष्ठानं तदा सांनाय्यधर्माणां सर्वेषां स्वप्रधानेन सह द्वाभ्यामाग्नेयधर्मतदनुष्ठानाभ्यां विप्रकर्षः स्यात्। यदा तु सांनाय्यधर्माणां केषांचिद्वत्सापाकरणादीनां पूर्वमनुष्ठानेऽप्यन्ये सर्वेऽवदानादयस्तद्धर्मा मुख्यक्रममाश्रित्याग्नेयधर्मानुष्ठानानन्तरमनुष्ठीयन्ते तदा सर्वेषामाग्नेयधर्मसांनाय्यधर्माणामेकैकेन विजातीयेन व्यवधानं भवति। आग्नेयधर्माणां स्वप्रधानेन सह सांनाय्यधर्मैर्व्यवधानात् सांनाय्यधर्माणां च स्वप्रधानेन सहाग्नेयानुष्ठानेन व्यवधानादिति न विप्रकर्षः। तस्मान्मुख्यक्रमः प्रवृत्तिक्रमाद्बलवानिति।

ग्रन्थ के मूल अंश में प्रयुक्त 'प्रधानक्रम' का अर्थ है 'मुख्य यागों में होने वाला क्रम' तथा 'अङ्ग क्रम' का अर्थ है 'अङ्गक्रियाओं का पौर्वापर्य'। अभिघारण का अर्थ है 'पिघले हुए घृत से अभिषेक'। जहाँ बहुत से साङ्ग प्रधान कर्मों का एक साथ अनुष्ठान अपेक्षित है वहाँ प्रयोगविधि से अङ्ग और प्रधान का साहित्य-एकसाथ होना-ज्ञात होने पर भी दूसरे प्रधान के साहित्य के कारण अपेक्षित व्यवधान को स्वीकार करने पर भी उससे अधिक व्यवधान में प्रमाण का अभाव होने से

प्रधानों में नैकट्य लाने के लिये मुख्यक्रम से ही अङ्गक्रम निश्चित होता हैं। जब एक स्थान पर प्रधान कर्मों का निर्देश हो जाता है और दूसरे जगह पर अङ्गकर्मों का, उस समय अनुष्ठान में शीघ्रता लाने के लिये अङ्गों को भी उसी क्रम से रखा जाता है जिसमें मुख्ययाग थे। जैसे तैत्तिरीय ब्राह्मण में पहले आग्नेय याग के याज्यानुवाक्यामन्त्रों का पाठ है और बाद में ऐन्द्र के। अतः पाठक्रम से यह निश्चित हो जाता है कि पहले आग्नेय का अनुष्ठान होगा फिर ऐन्द्र का। यह दोनों ही दर्श के प्रधानयाग हैं। उसी प्रकरण में प्रयाजों के अनुष्ठान से अवशिष्ट हवि के अभिधारण का विधान है। आग्नेय हवि, ऐन्द्र दधि और ऐन्द्रपय—ये तीन दर्शयाग की हवियाँ हैं। इनमें सर्वप्रथम आग्नेय हवि का अभिघारण होगा, अन्यों का नहीं, क्योंकि प्रधानयागों में आग्नेययाग का पाठ ऐन्द्रयाग से पहले हुआ है। इसके बाद ऐन्द्रयाग के अङ्ग दधि का अभिधारण होगा। इस प्रकार इन अङ्गयागों तथा प्रधानयागों का क्रम इस प्रकार होगा—

१–आग्नेयहविरभिघारण
२–ऐन्द्रदध्यभिघारण
३–आग्नेययाग
४–ऐन्द्रयाग

ऐसा क्रम रहने पर परस्पर सम्बद्ध आग्नेयहविरभिघारण तथा ऐन्द्रयाग के मध्य में केवल एक क्रिया का व्यवधान है—वह है ऐन्द्रदध्यभिघारण। इसी प्रकार ऐन्द्रदध्यभिघारण तथा ऐन्द्रयाग के मध्य में भी केवल एक ही क्रिया—आग्नेययाग का व्यवधान है। यह व्यवधान समान होने से उचित है।

यदि अंगों का क्रम ऐसा न रखकर उलट दिया गया अर्थात् ऐन्द्रदध्याभिघारण को पहले और आग्नेयहविरभिघारण को बाद में रखा गया तो क्रम इस प्रकार होगा—

१–ऐन्द्रदध्यभिघारण
२–आग्नेयहविरभिघारण
३–आग्नेययाग
४–ऐन्द्रयाग

स्पष्ट है कि आग्नेयहविरभिघारण और आग्नेययाग अत्यन्त निकट हो गये हैं, इन दोनों के मध्य में कोई अन्तर नहीं है, किन्तु ऐन्द्रदध्यभिघारण और ऐन्द्रयाग में दो-दो का व्यवधान है, यह व्यवधान असमान है, अतः अनुचित है।

मुख्यक्रम प्रमाण पाठक्रम से दुर्बल है क्योंकि पाठक्रम से विधान के वाक्य क्रमशः पठित होते हैं, उनका आधार कहीं ढूँढना नहीं पड़ता है, जब कि मुख्यक्रम पाठक्रम पर आश्रित है। मुख्य यागों का क्रम क्या है इसका निर्धारण ग्रन्थ में पठितक्रम को देखकर ही किया जा सकता है, स्वतन्त्र रूप से नहीं। अतः मुख्यक्रम के अनुसार अनुष्ठान में वह शीघ्रता नहीं हो सकती है जो पाठक्रम से तत्काल हो जाती है। उदाहरण के लिये पूर्व-चर्चित आग्नेययाग और ऐन्द्रयाग अंगों का क्रम देखा जा सकता है।

मुख्यक्रम पाठक्रम से तो दुर्बल हैं किन्तु प्रमाणों में अन्तिम प्रवृत्तिक्रम से प्रबल है। मुख्यक्रम का स्वरूप स्पष्ट किया जा चुका है। प्रवृत्तिक्रम में एक प्रधानकर्म के प्राप्त सभी अङ्गकर्मों का अनुष्ठान एक साथ होता है। इससे कठिनाई यह पड़ती है कि उस प्रधानकर्म के पूर्व या पश्चात् भी कुछ अन्य प्रधान क्रियाएँ होती हैं और उनसे भी सम्बद्ध कुछ अङ्गकर्म होते हैं। ऐसी दशा में यदि कदाचित् एक याग में अनेक अङ्गक्रियाएँ हो गयीं और सबका अनुष्ठान एक साथ करना पड़ा, तब कोई अङ्ग तो अपने प्रधान के अत्यन्त निकट आ जायेगा और कोई बहुत दूर पड़ जायेगा। उपाय रहने पर यह भी दूरी की असमानता अनुचित है। उदाहरणार्थ, दर्शपूर्णमास याग की दो प्रधान क्रियाएँ—आग्नेययाग तथा सांनाययाग—अपने अङ्गों के साथ ली जा सकती है।

आग्नेययाग का अनुष्ठान सांनाय से पहले होता है, किन्तु सांनाय से सम्बद्ध कुछ अङ्ग क्रियाएँ एक दिन पहले से ही प्रारम्भ हो जाती हैं। कुछ दूसरे दिन अपेक्षित हैं। यदि इसके सभी अङ्गों को प्रवृत्तिक्रम के अनुसार रख दिया गया तो नियमोल्लंघन तो होगा ही, कार्य भी नहीं हो सकेगा, क्योंकि किसी भी दिन दही से काम लेने के लिये दूध को एक दिन पहले जमाना ही पड़ेगा। सांनाययाग दही और दूध से सम्बन्ध रखने वाला याग है। इनके अतिरिक्त दूसरी कठिनाई यह होगी कि दो प्रधान यागों तथा उनके अंगों में अनुचित अतिशय सामीप्य और दूरस्थता होगी। सांनाययाग के एक दिन पूर्व होने वाले अङ्ग हैं—शाखाच्छेदन, वत्सापाकरण, दोहन आदि, दूसरे दिन के हैं अवदान, अभिघारण, हविरासादन आदि। दूसरे ही दिन के आग्नेययाग के अङ्गकर्म हैं अवदान, अभिघारण, हविरासादन आदि। इसके बाद क्रमशः मुख्ययाग आग्नेय और सांनाय्य सम्पन्न होंगे। इनका रेखाचित्र इस प्रकार हो सकता है—




यहाँ यदि सांनाय्य के (क) और (ख) दोनों अङ्गों को एक साथ अनुष्ठित किया जाता है तो प्रधानयाग संख्या (४) से इनमें बहुत दूरी होगी और अङ्गक्रिया संख्या (२) तथा प्रधान-क्रिया (३) में अत्यन्त सामीप्य होगा। यह स्थिति प्रवृत्तिक्रम से अनुष्ठान करने पर होगी, जब कि मुख्यक्रम से कार्यों का रेखाचित्र इस प्रकार होगा—



यहाँ सांनाय्य के पूर्वदिन के कर्मों का अनुष्ठान तो अर्थक्रम से पहले करना अनिवार्य है, किन्तु दूसरे दिन सम्पाद्य कर्मों में औचित्य के अनुसार संयोजन अपेक्षित है। अतः दूसरे दिन आग्नेयाङ्ग-भूत अवदान आदि को—( संख्या २ ) को—पहले और सांनाय्याङ्ग अवदान आदि ( संख्या ३ ) को करने पर अङ्गकर्म ( २ ) तथा प्रधानकर्म आग्नेय ( ४ ) के बीच में केवल एक अङ्गकर्म ( संख्या ३ ) का व्यवधान होगा और यही स्थिति अङ्गकर्म ( संख्या ३ ) तथा प्रधानकर्म ( संख्या ५ ) के मध्य में रहेगी। इस प्रकार अपने २ अङ्गों तथा प्रधानों में केवल एक-एक का व्यवधान होने से समान दूरी होगी। इससे कर्म में अविलम्ब होगा। अविलम्बतासम्पादन के कारण मुख्यक्रम प्रवृत्तिक्रम से प्रबल सिद्ध हो जाता है।

प्रवृत्तिक्रमः

**( ४३ ) सहप्रयुज्यमानेषु प्रधानेषु संनिपातिनामङ्गानामावृत्त्यानुष्ठाने कर्तव्ये हि द्वितीयादिपदार्थानां प्रथमानुष्ठितपदार्थक्रमाद्यः क्रमः स प्रवृत्तिक्रमः। यथा प्राजापत्यपश्वङ्गेषु। प्राजापत्या हि 'वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ती'ति वाक्येन तृतीयानिर्देशात् सेतिकर्तव्यताका एककालत्वेन विहिताः, अतस्तेषां तदङ्गानां चोपाकरणनियोजनप्रभृतीनां साहित्यं संपाद्यम्। तच्च प्राजापत्यपशूनां संप्रतिपन्नदेवताकत्वेन युगपदनुष्ठानादुपपद्यते। तदङ्गानां चोपाकरणादीनां युगपदनुष्ठानमशक्यम्। अतस्तेषां साहित्यमव्यवहितानुष्ठानात् संपाद्यम्। ततश्चैकस्योपाकरणं विधायापरस्योपाकरणं विधेयम्। एवं नियोजनादिकमपि। तथा च प्राजापत्येषु कस्माच्चित्पशोरारभ्य एकं सर्वत्रानुष्ठाय द्वितीयादिपदार्थस्तेनैव क्रमेणानुष्ठेयः स प्रवृत्तिक्रमः।**

**सोऽयं श्रुत्यादिभ्यो दुर्बलः। तदेवं संक्षेपतो निरूपितः षड्विधक्रमनिरूपणेन प्रयोगविधिः।**

साथ-साथ प्रधान क्रियाओं का अनुष्ठान करने पर 'सन्निपत्योपकारक अङ्गों' के अनुष्ठान की आवृत्ति से अपेक्षा होने पर प्रथमतः सम्पादित क्रियाओं के क्रम से द्वितीय आदि क्रियाओं का जो क्रम होता है उसे प्रवृत्तिक्रम कहते हैं, जैसे 'प्राजापत्य' नाम के पशुयागों के अङ्गों में होता है। 'वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ति'—वैश्वदेवीयाग करके प्राजापत्य पशुओं से सम्बद्ध क्रियाओं के द्वारा अनुष्ठान करे—इस वाक्य से तृतीया के निर्देश द्वारा प्राजापत्य पशुयागों का इतिकर्त्तव्यता के साथ एक काल में विधान किया गया है। इसलिये उन पशुयागों का तथा उनके अङ्ग उपाकरण, नियोजन आदि का साहित्य सम्पन्न करना अपेक्षित है। यह अनुष्ठान का साथ-साथ होना—साहित्य-समानदेवता वाले प्राजापत्यपशु से सम्बद्ध क्रियाओं को एक साथ सम्पन्न करने से संभव होता है। पशुयाग के उपाकरण आदि अङ्गों का एक साथ सम्पादन संभव नहीं। इसलिये उनके साहित्य का सम्पादन अव्यवहित अनुष्ठानों से करना चाहिये। वह अव्यवहित अनुष्ठान तब होगा जब एक पशु का उपाकरण करके दूसरे का भी उपाकरण किया जाये। इसी प्रकार नियोजन आदि भी। इसका अभिप्राय यह है कि प्राजापत्य पशुओं में किसी भी पशु से आरम्भ करके एक कर्म को सबके साथ करके फिर द्वितीय आदि कर्मों को भी उसी क्रम से करना चाहिये। वही प्रवृत्तिक्रम है।

वह यह प्रवृत्तिक्रम श्रुति आदि प्रमाणों से दुर्बल है। इस प्रकार षड्विध क्रम के निरूपण से प्रयोगविधि का संक्षेप में निरूपण सम्पन्न हुआ।

**इदानीं प्रवृत्तिक्रमं** लक्षयति—सहप्रयुज्येत्यादिना। **तत्रोदाहरणमाह**—यथेति।

**प्राजापत्या हि सेतिकर्तव्यताका एककालत्वेन विहिता इत्यन्वयः।** अत इति। **तेषामेककालत्वेन विहितत्वादित्यर्थः।** तेषामिति। **प्राजापत्यानामित्यर्थः।** उपकरणेत्याद्युक्तार्थं एव बोध्यः। तच्चेति। **साहित्यं चेत्यर्थः।** संप्रतिपन्नदेवताकत्वेनेत्यत्र 'संप्रतिपन्नदेवताकालत्वेने'ति पाठः। तत्कालस्तु वैश्वदेव्यनुष्ठानान्तरकालो देवता च प्रजापतिरेव। तदङ्गानामिति। **प्राजापत्याङ्गानामित्यर्थः।** अशक्यमिति। **अनेकेषां पशूनामुपाकरणं नियोजनं चैकस्मिन्काल एकेन कर्त्रा कर्तुमशक्यमित्यर्थः।** अत इति। **उपाकरणादीनां युगपदनुष्ठानानुपपत्तेरित्यर्थः।** तेषामिति। **उपाकरणादीनामित्यर्थः।**

तच्चेति। **अव्यवधानेन साहित्यं चेत्यर्थः। एवमेकस्य पशोर्नियोजनं विधायापरस्य पशोर्नियोजनं विधेयमित्यतिदिशति**—एवमिति। **प्राजापत्येष्वेकस्य पदार्थस्य सर्वत्रानुष्ठेयत्वे यं पशुमारभ्यैकः पदार्थोऽनुष्ठितस्तमेव पशुमारभ्य द्वितीयादिः पादार्थोऽनुष्ठेय इत्याह**—तथा चेत्यादिना। सोऽयमिति। **प्रवृत्तिक्रम इत्यर्थः। आदिशब्देनार्थक्रमादयो गृह्यन्ते। अत्रेदं बोध्यम्—सप्तदश प्राजापत्या भवन्ति, सप्तदश प्राजापत्यान्पशूनालभेतेति तद्विधौ तथैव श्रवणात्। तथा च प्राजापत्येषु तेषु यं कंचित्पशुनारभ्योपाकरणं सप्तदशसु पशुषु कृत्वा तमेव पशुमारभ्य नियोजनं कर्तव्यम्। एवं च तत्तत्पशूपाकरणानां तत्तत्पशुनियोजनैस्तुल्यं षोडशक्षणैर्व्यवधानं भवति। तथा सति 'सप्तदश प्राजापत्यान्पशूनालभेते'त्युत्पत्तिवाक्ये वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्तीति प्रयोगवाक्ये च श्रुतं साङ्गानां सप्तदशपशुयागानां साहित्यमुपपद्यते। अन्यथा तेष्वेकैकस्मिन्नुपाकरणनियोजनादिसर्वसंस्काराणां समापने प्रत्यक्षवचनावगतपशुसाहित्यं बाधितं भवेदिति। एवं निरूपितं षड्विधक्रमनिरूपणेन प्रयोगविधिमुपसंहरति**—तदेवमिति।

प्रजापति देवता से सम्बद्ध याग प्राजापत्य है। यह वाजपेययागों में एक है। इस याग में १७ पशुओं का आलम्भन अपेक्षित है—'सप्तदश प्राजापत्यान् पशून् आलभेत'। प्रधान क्रिया यहाँ प्राजापत्ययाग है। पशुओं को लाना—( उपाकरण ), यूप में बाँधना ( नियोजन ) आदि क्रियाएँ सन्निपत्योपकारक हैं। यहाँ प्राजापत्ययाग तथा सन्निपत्योपकारक उपाकरण आदि का एक साथ ही अनुष्ठान अपेक्षित है। यह सबका एक साथ अनुष्ठान 'वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ति' में प्रयुक्त तृतीया बहुवचनान्त पद 'प्राजापत्यैः' से ज्ञात होता है। इसमें तृतीया विभक्ति से जहाँ-जहाँ 'इतिकर्त्तव्यता'—साधनता का ज्ञान होता है वहीं बहुवचनता से सभी का एक साथ ही एक काल में सम्पादन भो प्राप्त होता है क्योंकि 'प्राजापत्य' शब्द से सबका एकदेवकत्व भी सिद्ध होता है। एकदेवताविषयक सभी पशुओं के उपाकरण आदि अङ्गकर्म एक साथ प्राप्त तो हो रहे हैं किन्तु सबका सम्पादन एक साथ करना व्यवहारतः संभव नहीं है। अतः अव्यवहित क्रमशः अनुष्ठान में ही इनको एक साथ सम्पन्न मानना पड़ेगा। यहाँ 'साहित्य' का अर्थ है 'एक काल में सम्पन्न होना'।[1] एक साथ सबका अनुष्ठान संभव न होने से और किसी पशुविशेष से उसकी उपाकरण आदि अङ्गक्रियाओं के प्रारम्भ का उल्लेख न होने से किस पशु से क्रिया प्रारम्भ की जाये इसका निर्धारण प्रवृत्तिक्रम से होगा। इस विधि के अनुसार सत्रह पशुओं में से किसी एक से उपाकरण कर्म प्रारम्भ किया जाता है और शेष सोलह पशुओं का भी उपाकरण एक-एक करके सम्पन्न होता है। फिर नियोजन कर्म का प्रारम्भ उसी पशु से किया जाता है जिसका सर्वप्रथम

१. साहित्यमेककालकर्त्तव्यत्वम्। ......प्राजापत्यपदावगतप्रजापतिरूपैकदेवताकत्वेनेत्यत्रैः। ...अतस्तन्त्रानुष्ठानेन साहित्यसम्पादनस्याशक्यत्वात्। अव्यवहितानुष्ठानेन कर्मान्तरव्यवधानाभाववदनुष्ठानेन सम्पाद्यं घटयितव्यम्। प्रतिपादिका पृ० ९८-९।

उपाकरण किया गया था। इसी प्रकार पहले के ही क्रम में शेष सोलह में प्रत्येक का नियोजन किया जाता है। मूलग्रन्थ में 'द्वितीयादिपदार्थ' का अभिप्राय नियोजन-सदृश क्रम में दूसरे स्थान की क्रियाओं से है। इस प्रकार एक-एक अङ्गक्रिया एक-एक पशु के साथ पृथक्-पृथक् की जाती है। इसमें हर पशु से हर क्रिया का समान अन्तर होता है।

'प्रवृत्तिक्रम' छः क्रमों में अन्तिम है, अतः सभी पूर्ववर्तियों से दुर्बल है। प्रयोगविधि में क्रमनिरूपण के प्रसङ्ग में ध्यान देने की बात यह भी है कि यहाँ प्रत्येक पूर्व-पूर्व प्रमाण की प्रबलता प्रत्येक उत्तरोत्तरवर्ती से नहीं सिद्ध की गयी है। केवल कुछ का ही निरूपण है, उसमें भी पाठक्रम में तो उसी के दो भेदों—मन्त्रपाठ और ब्राह्मणपाठ—का परस्पर प्राबल्य और दौर्बल्य प्रदर्शित है। इस सबका कारण भास्कर की अनवधानता नहीं है, अपितु ग्रन्थसंक्षेप की ओर ध्यान ही प्रतीत होता है। दूसरी बात यह है कि प्रत्येक का परस्पर प्राबल्य और दौर्बल्य न निरूपित करने का यह भी अभिप्राय नहीं है कि जिनका प्राबल्य-दौर्बल्य वर्णित है उन्हीं में वह है, अन्यों में नहीं। वस्तुतः सिद्धान्त यह है कि प्रत्येक पूर्ववर्ती प्रमाण अपने समस्त परवर्तियों से प्रबल है।

## अधिकारविधिः

**( ४४ ) कर्मजन्यफलस्वाम्यबोधको विधिरधिकारविधिः। कर्मजन्यफलस्वाम्यं कर्मजन्यफलभोक्तृत्वम्। स च 'यजेत स्वर्गकामः' इत्यादिरूपः। स्वर्गमुद्दिश्ययागं विदधताऽनेन स्वर्गकामस्य यागजन्यफलभोक्तृत्वं प्रतिपाद्यते। 'यस्याहिताग्ने-रग्निर्गृहान्दहेत्सोऽग्नये क्षामवतेऽष्टाकपालं निर्वपेदि'त्यादिनाऽग्निदाहादौ निमित्ते कर्म विदधता निमित्तवतः कर्मजन्यपापक्षयरूपफलस्वाम्यं प्रतिपाद्यते। एवं 'अहरहः सन्ध्यामुपासीते' त्यादिना शुचिविहितकालजीविनः संध्योपासनजन्य-प्रत्यवायपरिहाररूपफलस्वाम्यं बोध्यते।**

( यागादि ) कर्म से उत्पन्न होने वाले ( स्वर्गादि ) फल के स्वामित्व का ज्ञान कराने वाली विधि अधिकारविधि है। कर्म से उत्पाद्य फल के स्वामित्व का अर्थ है कर्म से उत्पाद्य फल का भोक्ता होना। और उस अधिकारविधि का रूप है—स्वर्गकामो यजेत–आदि। स्वर्ग को लक्ष्य करके याग का विधान करने वाले इस वाक्य के द्वारा स्वर्ग की कामना वाले पुरुष के यागजन्य फल का भोक्तृत्व का प्रतिपादन होता है। 'जिस अग्न्याधान करने वाले पुरुष घर अग्नि जला दे, वह पुरुष क्षीण हो गयी अग्नि को आठ कपालों में पकाया गया ( पुरोडाश ) समर्पित करे।' आदि मन्त्रों के द्वारा अग्निदाह आदि निमित्त उपस्थित होनेपर कर्म का विधान करते हुए निमित्तवान् पुरुष के ( अष्टाकपालनिर्वपनरूप ) कर्मजन्य-पापक्षयरूप फल का स्वामित्व प्रतिपादित किया जाता है। इसी प्रकार 'प्रतिदिन सन्ध्यो-पासना करे' इत्यादि वाक्यों के द्वारा पवित्र एवं शास्त्रानुमोदितरीति से जीवनयापन करने वाले पुरुष के सन्ध्योपासन से जन्य पापनिवारणरूप फल के स्वामित्व का ज्ञान कराया जा रहा है।

**इदानीं क्रमप्राप्तमधिकारविधिं निरूपयति**—कर्मजन्येति। **कर्मजन्यफलस्वाम्यपदं व्याचष्टे**—कर्मजन्यफलस्वाम्यमिति। स चेति। **अधिकारविधिश्चेत्यर्थः।** अनेनेति। **'यजेत स्वर्गकाम' इत्यादिवाक्येनेत्यर्थः। तत्रोदाहरणान्तरमाह**—यस्येति। क्षामवत इति। **क्षामवत्त्वगुणविशिष्टायेत्यर्थः।** निमित्तवत इति। **अग्निना गृहदाहादिरूपनिमित्तवतः पुरुषस्येत्यर्थः। इत्यादिना कर्मविदधता विधिनेत्यन्वयः।** कर्मजन्येति। **अग्निदेवताक-**

**कर्मजन्येत्यर्थः । तत्रैवोदाहरणान्तरमाह—एवमिति । शुचिविहितकालजीविन इति । शौचविशिष्टत्वे सति विहितकालजीविन इत्यर्थः ।**

अधिकारविधि के द्वारा बतलाया जाता है कि कर्म से उत्पन्न फल के भोग का अधिकारी कौन है। सभी लोग कर्म से उत्पन्न फल का भोग नहीं कर सकते। कर्म सामान्यतः तीन प्रकार के हैं—काम्य, नैमित्तिक तथा नित्य। इसी क्रम से यहाँ उदाहरण दिये गये हैं। काम्य कर्म वह है जो किसी कामनाविशेष की सिद्धि के लिये किया जाता है। जैसे—'स्वर्गकामो यजेत'। जिसको स्वर्ग की इच्छा हो वह याग करे। इस वाक्य से स्पष्ट है कि जिसे स्वर्ग की कामना होगी उसी के द्वारा याग सम्पन्न किये जाने पर स्वर्गरूप फल मिलेगा। स्वर्ग की कामना न रखते हुए यज्ञ करने वाले पुरुष को नहीं मिलेगा, उसके फल पर उसका स्वामित्व नहीं होगा।

दूसरा उदाहरण नैमित्तिक कर्म के फलस्वाम्य का है। किसी प्रयोजनविशेष के उपस्थित होने पर उसके लिये किये जाने वाले कर्म 'नैमित्तिक' हैं। उदाहरण में दिया गया है कि जिस अग्निहोत्री की अग्नि से घर जल जाये उसे चाहिये कि अग्नि के क्षीण होने पर वह अग्नि के लिये आठ कपालों में बनाया गया पुरोडाश समर्पित करे। इससे उसकी अग्नि से घरों के जलने से होने वाले पाप का क्षय हो जायेगा। इसका अभिप्राय यह है कि अग्नि के लिये 'अष्टाकपालनिर्वपन' करने से केवल उसी अग्निहोत्री का पापक्षय होगा जिसकी अग्नि से घर जले हैं। अन्य किसी अग्निहोत्री के द्वारा यदि यह निर्वपन किया गया तो उसका पापविशेष का क्षयरूप फल उसे नहीं मिलेगा। यहाँ अग्निदाह निमित्त है, अग्निहोत्रो निमित्तवान् है और पुरोडाशनिर्वपन कर्म से उत्पन्न पापक्षय फल है। इसका अधिकारी निमित्तवान् पुरुष ही है।

तृतीय उदाहरण नित्यकर्म का है। नित्यकर्म वे हैं जिनके करने पर पुण्य-प्राप्ति तो नहीं होती, किन्तु न करने पर पाप अवश्य लगता है। यह प्रत्यवाय-परिहार पापक्षय का साधन है। सन्ध्योपासना आदि कर्मों की गणना इसमें होती है। किन्तु इन कर्मों के सम्पादन का न तो अधिकार सबको है और न सभी का प्रत्यवायपरिहार ही होगा। केवल उसी व्यक्ति के द्वारा अनुष्ठित सन्ध्योपासन कर्म से प्रत्यवायपरिहार होगा जिसका जीवन पवित्र है और जो शास्त्र-निर्धारित नियमों के अनुसार जीवनयापन कर रहा है। 'विहित' का अर्थ 'शास्त्रविधानसम्मत' है। इसका स्पष्टार्थ यह हुआ कि जिस पुरुष के जातकर्म, उपनयन आदि संस्कार उचित समय पर नियमतः हुए हैं उसी के द्वारा सन्ध्योपासन कर्म करने पर प्रत्यवाय-परिहार होगा।

काम्यकर्म वाले 'स्वर्गकामो यजेत' वाक्य में स्वर्गरूप फल का अधिकारी 'स्वर्गप्राप्ति का इच्छुक-स्वर्गकाम-श्रुत है अर्थात् मन्त्रवाक्य में पठित है, प्राप्त है। अधिकारी बनाने वाली 'इच्छा'-कामना-शब्द का ग्रहण वाक्य में हुआ है। जहाँ फलस्वाम्य-बोधक पद श्रुत नहीं होता है वहाँ प्रयोजनवश कल्पित कर लिया जाता है। नैमित्तिक कर्म वाले—"यस्याहि०" वाक्य में 'पापक्षयकामः' पद श्रुत नहीं है, तथापि उसकी कल्पना कर ली जाती है कि घर जलने से पाप लगेगा अतः अग्निहोत्री में गृहदाहजन्य पापक्षय की कामना होगी। यह कल्पना अर्थसिद्धि के लिये है। कहीं-कहीं पर फल श्रुत होता हैं और कहीं अश्रुत होने पर भी अर्थसिद्ध 'किन्तु कुछ स्थलों पर इन दोनों के अभाव में भी फलस्वाम्य दूसरे प्रमाण से कल्पित करना पड़ता है। यह तृतीय स्थिति नित्यकर्मों में प्रायः होती है। उदाहरणार्थ, 'अहरहः संध्यामुपासीत' में यह निर्देश नहीं है कि कौन संध्योपासना करे, न कोई उद्देश्य ही उक्त है जिसके लिये अर्थसिद्धिहेतु कल्पना ही की जा सके। अतः अर्थवाद से सन्ध्योपासन के अभाव में प्रत्यवाय का ज्ञान होने से 'शुचिविहितकालजीवित्व' का आक्षेप हो जाता है।[1]

---

१. शुचितत्कालजीवी कर्म्म कुर्यादिति विधेरिति भावः। ···सन्ध्योपासनाद्यभावस्य प्रत्यवाय—साधनताया अर्थवादावगम्यत्वात् सन्ध्योपासनस्य सुतरां तत्परिहारसाधनत्वं सिध्यति। प्रति-पादिका–पृ० १०१.

'यस्याहिताग्नेः' आदि के बाद 'इत्यादिना' आदि वाक्य का अन्वय 'इत्यादिना कर्मविदधता अग्निदाहादिनिमित्तं' रूप में करना चाहिये। 'कर्मविदधता' 'इत्यादिना' के साथ है।

**( ४५ ) तच्च फलस्वाम्यं तस्यैव योऽधिकारविशिष्टः, अधिकारश्च स एव यद्विधिवाक्येषु पुरुषविशेषणत्वेन श्रूयते। यथा काम्ये कर्मणि फलकामना, नैमित्तिके कर्मणि निमित्तनिश्चयः, नित्ये संध्योपासनादौ शुचिविहितकालजीवित्वम्। अत एव 'राजाराजसूयेन स्वाराज्यकामो यजेते'त्यनेन विधिवाक्येन स्वाराज्यमुद्दिश्य विदधतापि न स्वाराज्यमात्रकामस्य तत्फलभोक्तृत्वं प्रतिपाद्यते, किंतु राज्ञः सतः स्वाराज्यकामस्यैव, राजत्वस्याप्यधिकारिविशेषणत्वेन श्रवणात्।**

**क्वचित्तु पुरुषविशेषणत्वेनाश्रुतमप्यधिकारिविशेषणम्। यथाध्ययनविधिसिद्धा विद्या, क्रतुविधीनामर्थज्ञानापेक्षणीयत्वेनाध्ययनविधिसिद्धार्थज्ञानवन्तं प्रत्येव प्रवृत्तेः। एवमग्निसाध्यकर्मसु आधानसिद्धाग्निमत्ता। अग्निसाध्यकर्मणामग्न्यपेक्षत्वेन तद्विधीनामाधानसिद्धाग्निमन्तं प्रत्येव प्रवृत्तेः।**

**एवं सामर्थ्यमपि। 'आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणी'ति न्यायात् समर्थं प्रत्येव विधिप्रवृत्तेः। तदेवं निरूपितो विधिः।**

और वह ( फलविधि-बोधित ) फल का भोक्तृत्व उसी का होता है जो अधिकार से विशिष्ट होता है, और अधिकार वही है जो विधिवाक्यों में पुरुष के विशेषण के रूप में उक्त होता है। जैसे काम्यकर्म में फलकामना, नैमित्तिक कर्म में निमित्त का निश्चय, और नित्यकर्म संध्योपासन आदि में पवित्र एवं शास्त्रानुमोदित समय-यापन करना। इसीलिये 'स्वाराज्य की कामना वाला राजा राजसूय याग सम्पन्न करे' यह विधिवाक्य स्वाराज्य को लक्ष्य करके याग का विधान करता हुआ भी केवल स्वाराज्य के इच्छुक व्यक्ति के लिये उसके फल का भोक्तृत्व प्रतिपादन नहीं करता है, अपितु 'राजा होते हुए स्वाराज्य की कामना करने वाले के लिये ही, क्योंकि ( यहाँ ) राजा होना भी अधिकारी के विशेषण के रूप में उक्त है।

कहीं-कहीं पुरुष के विशेषण के रूप में उक्त न होने वाला भी अधिकारी का विशेषण होता है, जैसे ( 'स्वाध्यायोऽध्येतव्यः इस ) अध्ययन की विधि से सिद्ध विद्या, क्योंकि यज्ञ सम्बन्धी विधियों की अर्थज्ञान की अपेक्षा होने से अध्ययनविधि से प्राप्त अर्थ का ज्ञान रखने वाले के प्रति ही प्रवृत्ति होती है। इसी प्रकार अग्नि से सिद्ध होने वाले कर्मों में आधान से सिद्ध अग्निमत्ता अपेक्षित होती है, क्योंकि अग्नि से सम्पाद्य कर्मों को अग्नि की अपेक्षा होने से उनके विधायक वाक्यों की प्रवृत्ति आधान से सिद्ध अग्नि वाले के लिये ही होती है।

इसी प्रकार सामर्थ्य भी ( जो कि विधिवाक्यों में उक्त नहीं होता है, अधिकारी के विशेषण के रूप में अपेक्षित होता है। ) 'अर्थ को कहने वाले आख्यातों की शक्ति–सामर्थ्य–सहायिका होती है।' इस नियम से समर्थ के प्रति ही विधि की प्रवृत्ति होती है। इस प्रकार ( वेद के एक भाग ) विधि का निरूपण हुआ।

तच्चेति। **फलविधिबोधितं चेत्यर्थः। को ह्यधिकारो यद्विशिष्टस्य पुंसः कर्मजन्यफलभोक्तृत्वरूपं फलस्वाम्यं विधिना बोध्यत इत्यत आह**––अधिकारश्चेति। अत एवेति। **विधिवाक्येषु पुरुषविशेषणत्वेन श्रूयमाणस्याधिकारत्वादेवेत्यर्थः। स्वाराज्यमुद्दिश्येत्यत्र राजसूयमिति शेषः।** राज्ञः सत इति। **क्षत्रियस्य सत इत्यर्थः। तत्र हेतुमाह**––

राजत्वस्येति । श्रवणादिति । 'राजसूयेने'त्यत्र श्रवणादित्यर्थः । अत्र हि राजशब्देन क्षत्रिय एवोच्यते, नतु राज्यसंबन्धमात्रेण तदन्योऽपि । तेन क्षत्रियस्यैव राजसूयेऽधिकारो नतु तदन्यस्य ब्राह्मणादेरित्यन्यत्र विस्तर इति भावः ।

इदमत्र चिन्त्यते--'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'ति श्रूयते । तत्र क्रियानिष्पादकत्वं कर्तृत्वं फलभोक्तृतया स्वामित्वमधिकारः । तादृशोऽधिकारो यागकर्तुर्नास्ति । कुतः ? फलभोगाभावात् तथा हि--यजेतेत्यत्राख्यातेन भावनाभिधीयते । तस्यां च धात्वर्थो भाव्यः, एकपदोपात्तत्वात् । स्वर्गस्तु पदान्तरोपात्तत्वाद्वाक्येन भाव्यतयाऽन्वेतव्यः । तच्च वाक्यमेकपदरूपया श्रुत्या बाध्यते । स्वर्गस्य भाव्यत्वाभावे सति गुणत्वमभ्युपेयम् । स्वर्गशब्दो नात्र सुखवाची किंतु सुखसाधनं चन्दनादिद्रव्यं ब्रूते । लोके तथा व्यवहारात् । तच्च कामयितुं योग्यम् । तेन द्रव्येण विना यागानिष्पत्तेः । तस्मादस्मिन्वाक्ये फलानभिधाने तद्भोगाभावात्कर्तुर्यागे कर्तृत्वमेव नत्वधिकार इत्यधिकारलक्षणं नारब्धव्यमिति प्राप्ते ब्रूमः—यजेतेत्यत्र प्रत्ययस्य केवलमाख्यातरूपत्वमेवेति न च मन्तव्यं, किंतु लिङ्प्रत्ययत्वेन विधिरूपत्वमप्यस्ति तत्राख्यातत्वाकारेण भावनामाचष्टे, विधित्वाकारेण पुरुषं प्रवर्तयति, पुरुषश्च स्वाभिमतफलमन्तरेण न प्रवर्तते इति तदपेक्षितं स्वर्गमेव भाव्यतया विधिरुपादत्ते । स्वर्गशब्दश्चोत्कृष्टे सुखे रूढः । द्रव्ये तु लाक्षणिकः । तस्मात्सुखस्य भाव्यत्वं विधिश्रुत्या सिद्धम् । धात्वर्थस्य तु भाव्यत्वमेकपदेन प्रतीयमानमपि प्रत्ययेन नावगम्यते, किंतु प्रकृत्या । तथासति स्वर्गभाव्यत्वं भावनायां प्रत्यासन्नयेकेनैव विधिरूपेणाख्यातेनावगमात्कमियोगादपि स्वर्गस्यैव भाव्यत्वम् । तस्मात्फलभोगसंभवेन कर्तुरधिकारोऽस्तीत्यधिकारलक्षणमारब्धव्यमिति ।

विधिवाक्येष्वश्रुतमपि किंचिदधिकारिविशेषणत्वेनान्यथानुपपत्त्या तत्समाश्रयणेन व्यवहारोपपत्तिरित्याशयेनाह–क्वचित्त्विति । तत्रोदाहरणमाह–यथेति । विद्येत्यत्रविधिवाक्येष्वश्रुतमप्यधिकारिविशेषणत्वेन तद्विशेषणमिति शेषः । तत्र हेतुमाह–क्रत्वित्यादिना । तत्रैवोदाहरणान्तरमाह–एवमिति । अग्निमत्तेत्यत्रापि पूर्ववदेव शेषो बोध्यः । तत्रापि हेतुमाह–अग्निसाध्येति । तद्विधीनामिति । अग्निसाध्यकर्मविधीनामित्यर्थः । अनेन च निरुक्ताधिकारिविशेषणेन शूद्रस्य यागेऽनधिकारो ध्वनितः । तस्याध्ययनविधिसिद्धविद्याया अभावादाधानसिद्धाग्निमत्ताया अभावाच्च । किंच अध्ययने ह्युपनीतस्यैवाधिकारात् उपनयनेऽपि च 'अष्टवर्षं ब्राह्मणमुपनयीते'त्यादिना त्रैवर्णिकस्यैवाधिकारविधानात् । अग्न्याधानेऽपि 'वसन्ते ब्राह्मणोऽग्नीनादधीते'त्यादिना त्रैवर्णिकमात्रस्याधिकारविधानाच्च । यद्यपि 'वर्षासु रथकारोऽग्नीनादधीते'त्यनेन रथकारस्य सौधन्वनापरनामकस्याग्न्याधानं विहितं योगाद्रूढेर्बलीयस्त्वात् तथापि नास्योत्तरकर्मस्वधिकारः, तस्याध्ययनविधिसिद्धविद्याया अभावादित्यन्यत्र विस्तर इति भावः । ननु तत्र रथं करोतीति व्युत्पत्त्या त्रैवर्णिक एव रथकारो नतु शूद्रस्य तत्राप्यधिकार इति चेन्न । संकीर्णजातिविशेषे रथकारशब्दस्य रूढत्वात् । तथा हि—वैश्यायां क्षत्रियादुत्पन्नो माहिष्यः । शूद्रायां वैश्यादुत्पन्ना करणी । तस्यां करण्यां माहिष्यादुत्पन्नो रथकारः । तथा च याज्ञवल्क्यः–'माहिष्येण करण्यां तु रथकारः प्रजायते' इति । तस्मान्न तादृशव्युत्पत्त्या त्रैवर्णिको रथकारशब्देन ग्रहीतुं

को यागवाचक मान लेने से मत्वर्थलक्षणा नामक दोष से मुक्ति मिल जाती है और कार्य भी सम्पन्न हो जाता है। नामधेय की यही उपयोगिता है।

यहाँ एक प्रश्न हो सकता है कि 'उद्भिदा यजेत' की ही भाँति 'व्रीहिभिर्यजेत' सदृश गुण-विधियों तथा 'सोमेन यजेत' सदृश विशिष्ट-विधियों में भी व्रीहि और सोम को नामधेय--यागनाम-ही क्यों न मान लिया जाये? इसके उत्तर में कहा जाता है कि व्रीहि आदि लोक में द्रव्यविशेष-धान-के वाचक के रूप में ही प्रचलित हो चुके हैं-अत्यन्त निरूढ़ हो गये हैं—अतः इनको गुणविधि में ही रखा जा सकता है, नामधेय के रूप में नहीं। सोमशब्द के विषय में 'प्रतिपादिका' टीका के रचयिता पं० कृष्णनाथ भट्टाचार्य के शब्द द्रष्टव्य हैं'—सोमशब्दस्यापि प्रसिद्धार्थत्वेन नामधेयत्वासम्भवादगत्या प्रसिद्धार्थद्वारेण लाक्षणिकार्थमादाय गुणविशिष्टविधित्वौचित्यात्। 'उद्भिदा यजेत' इत्यत्र तु लक्षणाश्रयणमन्तरेणापि गतिसम्भवे कथं लक्षणाश्रयणम्। तदुक्तं मिश्रैः—

विशिष्टविधिपक्षे तु भवेन्मत्वर्थलक्षणा।
सोमादौ गत्यभावात् सा, नत्वत्र, गतिसम्भवात्॥''[1]

**( ५२ ) 'चित्रया यजेत पशुकाम' इत्यत्र चित्राशब्दस्य कर्मनामधेयत्वं वाक्यभेदभयात्। तथा हि न तावदत्र गुणविशिष्टयागविधानं संभवति। 'दधि मधु पयो घृतं धाना उदकं तण्डुलास्तत्संसृष्टं प्राजापत्यमि' त्यनेन गुणस्य विहितत्वात्तद्विशिष्टयागविध्यनुपपत्तेः। यागस्य फलसंबन्धे गुणसंबन्धे च विधीयमाने वाक्यभेदः। तस्माच्चित्राशब्दः कर्मनामधेयम्। तथा च 'चित्रायागेन पशुं भावयेदि'ति सामानाधिकरण्येनान्वयान्न वाक्यभेदः।**

**प्रकृतेष्टेरनेकद्रव्यत्वेन चित्राशब्दवाच्यत्वोपपत्तिः।**

'चित्रया यजेत पशुकामः' इस वाक्य में चित्रा शब्द याग का नाम वाक्यभेद के भय से है (अर्थात् वाक्यभेद नामक दोष कहीं न हो जाये इसलिये उसके निवारणार्थ चित्राशब्द को याग का नाम माना गया है।) जैसे कि यहाँ पर गुणविशिष्ट याग का विधान संभव नहीं है, क्योंकि 'दधि मधु'०-दही, शहद, दुग्ध, घृत, भुने यव या लाई, जल और चावल, इनसे युक्त प्रजापति देवताक याग का विधान करे, इस वाक्य से गुण का विधान हो जाने के कारण उस (गुण) से विशिष्ट याग का विधान संगत नहीं है। याग का फल तथा गुण दोनों से सम्बन्ध मानने पर वाक्यभेद नामक दोष होता है। इसलिये चित्राशब्द कर्म का नामधेय हैं। इस प्रकार 'चित्रा नामक याग से पशु की भावना करे'। इस अर्थ में सामानाधिकरण्य से अन्वय होने के कारण वाक्यभेद नहीं होगा। प्रकृतियाग में अनेक द्रव्य अपेक्षित होने से चित्राशब्द का नाम उपपन्न होता है।

**इदानीं द्वितीयं वाक्यभेदप्रसङ्गरूपं नामधेयत्वस्य निमित्तमुदाहरणद्वारा प्रदर्शयति--** चित्रया यजेतेति। **वाक्यभेदमेवोपपादयति--**तथा हीत्यादिना। अत्रेति। **'चित्रया यजेत पशुकाम' इत्यस्मिन्वाक्य इत्यर्थः।** गुणविशिष्टेति। **चित्राशब्दार्थभूतचित्रवर्णकिंचिद्गुणविशिष्टेत्यर्थः। अत्र विशिष्टविधानासंभवे हेतुमाह**—दधीत्यादिना। तत्संसृष्टं प्राजापत्यमितीति। **तैर्दध्यादिभिर्द्रव्यैर्युक्तं प्रजापतिदेवताकं कर्मेत्यर्थः।** तद्विशिष्टेति। **निरुक्तगुणविशिष्टेत्यर्थः।** दधीत्यादिप्रकृतवाक्यस्यैतत्कर्मण **उत्पत्तिवाक्यत्वादस्य कर्मण उत्पत्तिशिष्टदध्यादिगुणावरुद्धत्वान्न तत्र गुणान्तरं विधातुं शक्यत इति भावः।** अत्र दध्यादिवाक्ये

१. प्रतिपादिका पृ० ११८.

दध्यादीनि षडेव द्रव्याणि श्रुतावाम्नातानि, उदकपदं तु प्रमादादायातम्, श्रुतितात्पर्यज्ञैर्माधवाचार्यैस्तथैवास्य वाक्यस्य व्याख्यातत्वात्। तथा च तद्वचनं 'दध्यादीनि विचित्राणि देयद्रव्याणि षडाम्नातानी'ति। नन्वत्र वाक्ये ह्युत्पत्तिवाक्यसिद्धस्वरूपस्य यागस्य पशुरूपफलसंबन्धो विचित्रद्रव्यरूपगुणसंबन्धश्च विधीयते। ततश्च न कर्मनामधेयत्वं चित्राशब्दस्येत्याशङ्क्याह--यागस्येति। तथा च यागेन पशुं भावयेद्यागं च तादृशगुणेन भावयेदिति यागस्य गुणफलोभयसंबन्धे विधीयमाने सत्यावृत्तिलक्षणो वाक्यभेदो दुर्वार इति भावः। उपपादितं वाक्यभेदप्रसङ्गमुपसंहरति--तस्मादिति। सिद्धे चित्राशब्दस्य कर्मनामधेयत्वे वाक्यं योजयति--तथा चेति। सामानाधिकरण्येनेति। यजिधात्वर्थयागसामानाधिकरण्येन नामधेयस्यान्वयाच्चित्रानामकेन यागेन पशुं भावयेदित्याकारकान्न निरुक्तवाक्यभेदापत्तिरित्यर्थः।

अनेकद्रव्यत्वेनेति। दध्यादिविचित्रानेकद्रव्यसाध्यत्वेनेत्यर्थः। ननु चित्राशब्दाच्चित्रत्वस्त्रीत्वयोः प्रतीतेः स्त्रीरत्नस्य च स्वभावतः प्राणिधर्मत्वात्प्रकृते दध्यादिद्रव्यके कर्मणि निवेशासंभवान्नानेन वाक्येन प्रकृते कर्मणि तादृशगुणविधानं क्रियते किंतु प्राणिद्रव्यके कर्मणि, अनारभ्याधीतानां चाङ्गानां प्रकृतिमात्रे प्रवेशाङ्गीकारात्। चित्रवाक्यस्याप्यनारभ्याधीतत्वात्सर्वपशुयागप्रकृतिभूते प्राणिद्रव्यकेऽग्नीषोमीये कर्मणि तेन गुणो विधीयते। तथा च 'अग्नीषोमीयं पशुमालभेते'ति विहितं पशुयागमत्र वाक्ये यजेतेति पदेनानूद्य तत्र चित्रापदेन चित्रत्वस्त्रीत्वरूपौ गुणौ विधीयेते इति चेन्न। चित्रत्वेन स्त्रीत्वेन च तं भावयेदिति द्वयोर्गुणयोर्विधाने वाक्यभेदप्रसङ्गात्। प्राप्ते कर्मण्यनेकगुणविधाने वाक्यभेदप्रसङ्गस्य सर्वसंमतत्वात्। तथा चोक्तम्--'प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः। अप्राप्ते तु विधीयेरन्बहवोऽप्येकयत्नतः' इति।

नन्वत्र वाक्यभेदपरिहाराय गुणद्वयविशिष्टं पशुद्रव्यरूपं कारकं विधीयत इति चेन्न। गौरवलक्षणवाक्यभेदप्रसङ्गात्। किंच दध्नादिवाक्यं प्रकृतस्य चित्रानामकस्य यागस्योत्पत्तिवचनं भवति। यागस्वरूपभूतयोर्दध्यादिद्रव्यप्रजापतिदेवतयोरत्रोपदिश्यमानत्वात्। उत्पन्नस्य च तस्य यागस्य 'चित्रया यजेत पशुकाम' इत्येतत्फलवाक्यमत्र यागस्य फलसंबन्धबोधनात्। एवं च सति प्रकृतार्थो लभ्येत। अग्नीषोमीयपश्वनुवादेन, तादृशगुणविधाने तु प्रकृतहानाप्रकृतप्रक्रिये प्रसज्येयातां, लिङ्प्रत्ययस्य चानुवादत्वाङ्गीकारान्मुख्यो विध्यर्थो बाध्येत, तस्माच्चित्रापदं नामधेयमेव न गुणविधिरिति ध्येयम्।

'उद्भिदा यजेत' के प्रसङ्ग में स्पष्ट किया जा चुका है कि उद्भिद् को गुणवाचक नहीं मान सकते क्योंकि उसकी फलविधि प्रमाणान्तर से अप्राप्त है, वहाँ उसे पशुरूप फल तथा उद्भिद्रूप गुण दोनों से अलग-अलग सम्बद्ध इसलिये नहीं माना जा सका क्योंकि ऐसा करने पर वाक्यभेद हो जायेगा, गुणविशिष्ट विधि इस लिये नहीं मानी गयी क्योंकि ऐसा करने पर मत्वर्थलक्षणा हो जाती, अतः नामधेय मान लेने से ही समस्या का समाधान हुआ था। लगभग वही स्थिति 'चित्रया यजेत पशुकामः' में भी है। इसको भी गुणविधि नहीं मान सकते क्योंकि पशुरूप फल का ज्ञान इसी से होता है, साथ ही दूसरी बात यह भी है कि पशुफल वाले चित्रा याग का गुणवाक्य 'दधि मधु पयो० आदि स्वतन्त्ररूप से प्राप्त होने के कारण किसी अन्य गुणविधि की आवश्यकता भी नहीं रहती। ऐसी दशा में 'चित्रा' शब्द जब गुण का वाचक नहीं हो सकता, तब 'चित्रया यजेत०' को

गुणविशिष्टविधि भी नहीं माना जा सकता। एक गुणविधि प्राप्त होने पर दूसरी गुणविधि की अपेक्षा नहीं रहती, यह मीमांसाशास्त्र का अभिमत है—

प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः।
अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः॥

चित्राशब्द गुणवाचक इसलिये भी नहीं हो सकता, क्योंकि इससे न तो द्रव्य का बोध होता है न देवता का, जब कि 'दधि मधु०'' आदि वाक्य से द्रव्य और देवता दोनों का ज्ञान हो रहा है।

गुणविशिष्टविधि न मानकर यदि 'चित्रया यजेत पशुकामः' में फल और गुण दोनों से 'याग' का अलग-अलग सम्बन्ध माना जाये तो भी वाक्यभेद नाम का दोष होने लगेगा, क्योंकि याग का फल से सम्बन्ध मानने पर अर्थ होगा—यागेन पशुं भावयेत्—और गुण से सम्बन्ध मानने पर अर्थ होग—चित्रया यागं भावयेत्—,इस दशा में स्पष्ट ही वाक्यभेद हो रहा है जो स्वयं में दोष है। 'यागस्य फलसम्बन्धे०' आदि वाक्य का यहीं अभिप्राय है। 'चित्राशब्द को याग का नाम मान लेने से वाक्यभेद दोष नहीं हो पाता। नामधेय मानने पर 'चित्रया यजेत०'' का अर्थ होगा—चित्रया यागेन पशुं भावयेत्। यहाँ 'चित्रया' और 'यागेन' दोनों ही पद तृतीया-विभक्ति के एक-वचन के हैं, अतः दोनों में सामानाधिकरण्य होने से दोनों में अभेदसम्बन्ध होगा। 'चित्रया यागं भावयेत्' और 'यागेन पशुं भावयेत्' इन दोनों वाक्यों में से प्रथम में 'चित्रया' तृतीया एकवचन में है और 'यागम्' द्वितीया एकवचन में, द्वितीय वाक्य में 'यागेन' तृतीया एकवचन में है और ''पशुम्'' द्वितीया एकवचन में। अतः सभी परस्पर व्यधिकरण हैं और उनमें अभेदान्विति नहीं हो सकती। वाक्यभेद व्यधिकरण में होता है, समानाधिकरण में नहीं।

प्रकृतयाग का नाम 'चित्रा' इसलिये रखा गया है क्योंकि इसमें विभिन्न प्रकार के द्रव्यों का प्रयोग होता है।[1] यदि 'चित्रया यजेत पशुकामः' इस पूरे वाक्य को गुणविधि न मानकर केवल 'चित्रा शब्द' को ही गुणवाचक माना जाये और उससे चित्रत्व-अनेकवर्णता तथा स्त्रीत्व—क्योंकि चित्राशब्द स्त्रीलिङ्ग में है—दो गुण माने जायें और दोनों से याग का विधान किया जाये, तो भी वाक्यभेद होगा ऐसा विद्वानों का मत है—'चित्रत्वेन स्त्रीत्वेन च तं भावयेत्' इति द्वयोर्गुणयोर्विधाने वाक्यभेदप्रसङ्गात्।

यहाँ एक शङ्का हो सकती है कि 'उद्भिदा यजेत पशुकामः' और 'चित्रया यजेत पशुकामः' दोनों वाक्य देखने में एक जैसे ही प्रतीत होते हैं, और प्रथम के प्रकरण में भी वाक्यभेद का उल्लेख हुआ है, फिर क्या कारण है कि एक को 'मत्वर्थलक्षणा' के भय से नामधेय माना गया और दूसरे को वाक्यभेद के भय से। किन्तु वस्तुतः दोनों की परिस्थितियों में अन्तर है। 'उद्भिदा०' आदि वाक्य में उद्भिद् को खनित्रवाचक-गुणवाचक-मानने पर ही पूरा वाक्य गुणविधि हो सकेगा। गुणविधि माने जाने के पहले आवश्यक यह है कि उसकी फलविधि अथवा कर्मविधि पहले से किसी दूसरे वाक्य से प्राप्त हो। किन्तु 'उद्भिदा यजेत पशुकामः' वाक्य के अतिरिक कोई दूसरा कर्मविधिबोधक वाक्य नहीं है। उस स्थिति में यह प्रश्न उठा था कि फिर इसी को गुण एवं फल दोनों का विधायक वाक्य क्यों न मान लिया जाये। उसके समाधान के प्रसङ्ग में यह बात आयी थी कि गुण और फल का विधान दो रीतियों से किया जा सकता है। एक तो पृथक्-पृथक् वाक्यों द्वारा–जैसे-उद्भिदा यागं भावयेत् और यागेन पशुं भावयेत्, तथा दूसरे गुणविशिष्टरूप से, जैसे—उद्भिद्वता यागेन पशुं भावयेत्। प्रथम प्रकार से अर्थ लेने पर वाक्यभेद नाम का वाक्यदोष

---

१. चित्राशब्दः······यजिसामानाधिकरण्येन यागनामधेयं भवति। चित्रत्वं तु तस्य विलक्षण-द्रव्यद्वारेणोपपद्यते। 'दधि मधु घृतम् आपः धानाः तण्डुलाः तत्संसृष्टं प्राजापत्यम्' इति दध्यादीनि विचित्राणि प्रदेयद्रव्याणि षडाम्नातानि तदेतच्चित्रानामकस्य यागस्योत्पत्तिवाक्यम्।······उत्पन्नस्य तस्य यागस्य 'चित्रया यजेत पशुकामः' इत्येतत्फलवाक्यम्। जैमिनि न्या० मा० वि० पृ० ४३.

होता है और दूसरे प्रकार से मत्वर्थलक्षणा नामक पद-दोष । वाक्यदोष से पददोष छोटा होता है, अतः उसी को क्यों न अगत्या मान लिया जाये । इस प्रकार स्पष्ट हो जाता है कि 'उद्भिदा यजेत पशुकामः' के प्रसङ्ग में अन्ततः मत्वर्थीयलक्षणा का विषय उपस्थित होता है, जिसे दूर करने के लिये उद्भिद् को नामधेय माना जाता है । वहाँ वाक्यभेद को दूर करने के लिये मत्वर्थलक्षणा का और उसे भी दूर करने के लिये नामधेय का ग्रहण होता है, अतः नामधेय का उपयोग मत्वर्थलक्षणादोष को दूर करने के लिये होता है न कि वाक्यदोष को । 'चित्रया यजेत' आदि में मत्वर्थीयलक्षणा का प्रसङ्ग ही नहीं आता, क्योंकि यह लक्षणा वहाँ होती है जहाँ फलविधि और गुणविधि में से कोई भी पृथक रूप से प्राप्त नहीं होती है, तभी इसके द्वारा गुण और कर्म दोनों का सम्मिलित विधान गुणविशिष्टविधि-लिया जाता है, किन्तु "चित्रया यजेत०" का गुणविधायक वाक्य 'दधि मधु०" आदि प्राप्त है । इस प्रकार यहाँ केवल वाक्यभेद दोष ही रहता है जिसे दूर करने के लिये नामधेय का आश्रय लिया जाता है ।

## तत्प्रख्यशास्त्रान्नामधेयत्वम्

**( ५३ ) 'अग्निहोत्रं जुहोती'त्यत्राग्निहोत्रशब्दस्य कर्मनामधेयत्वं तत्प्रख्यशास्त्रात् । तस्य गुणस्य प्रख्यापकस्य प्रापकस्य शास्त्रस्य विद्यमानत्वात्, अग्निहोत्रशब्दः कर्मनामधेयमिति यावत् ।**

**नन्वयं गुणविधिरेव कुतो नेति चेन्न । यद्यग्नौ होत्रमस्मिन्निति सप्तमीसमासमाश्रित्य होमाधारत्वेनाग्निरूपो गुणो विधेयस्तदा 'यदाहवनीये जुहोती'त्यनेनैवाग्नेः प्राप्तत्वात्तद्विधानानर्थक्यम् । अग्नये होत्रमिति चतुर्थीसमासमाश्रित्य अग्निदेवतारूपगुणोऽनेन विधीयत इति चेन्न । तद्देवतायाः शास्त्रान्तरेण प्राप्तत्वात् ।**

'अग्नि होत्रं जुहोति' इस वाक्य में अग्निहोत्र शब्द की कर्मनामधेयता तत्प्रख्यशास्त्र के कारण है । ( तत्प्रख्यशास्त्र पद का विग्रह है—तस्य प्रख्यापकस्य शास्त्रस्य विद्यमानत्वात्—जिसमें ) 'तस्य' का अर्थ हैं गुण का, 'प्रख्यापकस्य' का अर्थ है प्रापक, शास्त्र विद्यमान हैं अतः-अग्निहोत्रशब्द कर्म का नामधेय है ।

यहाँ शङ्का होती है कि यह वाक्य गुणविधि ही क्यों न माना जाये, तो उत्तर है कि नहीं । ( अर्थात् इसे गुणविधि नहीं माना जा सकता ) क्योंकि यदि ( अग्निहोत्र शब्द का ) 'अग्नौ होत्रम् अस्मिन्'—जिस अग्नि में होम किया जाता है—इस प्रकार के सप्तमी ( बहुव्रीहि ) समास का आश्रय लेकर होम के आधार के रूप में अग्निरूपी गुण का विधान किया जाता है तो 'यदाहवनीये जुहोति'—जब आहवनीय नामक अग्नि में हवन करता है—इस वाक्य से ही अग्नि की प्राप्ति हो जाने से ( दूसरे वाक्य 'अग्निहोत्रं जुहोति' आदि के द्वारा भी ) उसी का विधान व्यर्थ होगा । 'अग्नये होत्रम्'—अग्निदेव के लिये होम है—इस प्रकार से चतुर्थी समास का आश्रय लेकर अग्निदेवतारूप गुण का विधान यदि इस वाक्य से माना जाये तो भी ठीक नहीं होगा क्योंकि उस देवता की प्राप्ति दूसरे शास्त्रवाक्य से हो जाती है ।

**इदानीं तत्प्रख्यशास्त्ररूपात् तृतीयनिमित्तान्नामधेयत्वमग्निहोत्रशब्दस्य प्रदर्शयति––**अग्निहोत्रमिति । **'तत्प्रख्यं चान्यशास्त्र'**मिति हि **तत्प्रख्यशास्त्रसूत्रम् । तस्य फलितार्थमाह––**तस्येत्यादिना ।

**नन्वग्निहोत्रं जुहोतीत्यत्राग्निरूपस्य गुणस्यैव विधिर्न नामधेयत्वमग्निहोत्रशब्दस्य स्वीकर्तव्यमित्याशङ्कते––**नन्वयमिति । **यद्यत्र सप्तमीसमासमाश्रित्य होमाधारत्वेनाग्नि-**

**रूपस्य गुणस्य विधानं स्वीक्रियते तदा तदाधारत्वेनाग्निरूपस्य गुणस्य वाक्यान्तरेण प्राप्तत्वात्तत्त्वेन तद्विधानस्यानर्थक्यमापद्येतेत्याह––यद्यग्नावित्यादिना। चतुर्थीसमासमाश्रित्यात्राग्निदेवतारूपस्य गुणस्य विधानमाशङ्कते––चतुर्थीत्यादिना। नात्र देवतारूपेणाग्निरूपस्य गुणस्य विधानमुपपद्यत इति समाधत्ते––नेति। तत्र हेतुमाह––तद्देवताया इति। अग्निरत्र तच्छब्दार्थः।**

कुछ वाक्य ऐसे हैं जिनको देखने से लगता हैं कि मानो उनमें प्रयुक्त शब्द द्रव्य, देवता, आधार आदि गुणों का वाचक हो, किन्तु वस्तुतः उसको यागविशेष का नाम माना जाता है, क्योंकि उनसे जिन गुणों की अपेक्षा की जाती थी उनका विधान करने वाले दूसरे शास्त्रवाक्य प्राप्त होते हैं। यहाँ जिस हेतु से यागविशेष का नामधेय कोई पद होता है, वह हेतु हैं—'तत्प्रख्यशास्त्र' का विद्यमान होना। 'तत्प्रख्यशास्त्र' पद में 'तत्' गुण का, प्रख्यशब्द प्रख्यापक, प्रापक या ज्ञापक का तथा शास्त्र भिन्न शास्त्रीयवचन का वाचक है। जब गुणवाचक अन्य शास्त्रीयवचन पहले से ही विद्यमान हैं तब गुणवाचक के रूप में ही किसी दूसरे शब्द को स्वीकार करना उचित नहीं।

उदाहरण के लिये 'अग्निहोत्रं जुहोति' वाक्य तथा उसमें प्रयुक्त 'अग्निहोत्रं' पद को लिया जा सकता है। यहाँ सिद्धान्ततः 'अग्निहोत्रम्' यागविशेष का नाम हैं।[1] इसे गुणवाचक नहीं मान सकते क्योंकि गुणार्थक मानने के लिये इसका विग्रह दो प्रकार से हो सकता हैं–प्रथम–'अग्नौ होत्रमस्मिन्' अर्थात् वह अग्नि जिसमें होम किया जाता है और दूसरा–अग्नये होत्रम्–अग्निदेवता के लिये होम। पहले विग्रह में सप्तमी समास होने से आधार के रूप में और दूसरे विग्रह में चतुर्थीसमास होने से देवतारूप में अग्नि का ग्रहण हो सकता है। किन्तु वस्तुस्थिति यह है कि इसके अतिरिक्त भिन्न-भिन्न वाक्यों द्वारा आधाररूप आहवनीय अग्नि का, और देवरूप अग्निदेवता तथा सूर्यदेवता का विधान सम्पन्न हो चुकने से 'अग्निहोत्रं जुहोति' वाक्य से उन दोनों में से किसी भी अर्थ की अपेक्षा नहीं रह जाती। अतः आधार, देवता आदि गुणों के प्रापक 'यदाहवनीये जुहोति' 'अग्निर्ज्योतिः ज्योतिरग्निः स्वाहा' आदि शास्त्रमन्त्रों के पूर्वतः प्राप्त रहने से 'अग्निहोत्र' पद को गुणविधायक नहीं माना जा सकता। मन्त्र की पुनरुक्ति न हो अथवा वह निरर्थक न हो जाये, अतः इसे नामधेय स्वीकार किया जाता है।

## देवतारूपेणाग्निप्रापकशास्त्रप्रश्नः

**( ५४ ) किं तच्छास्त्रान्तरमिति चेत्। 'यदग्नये च प्रजापतये च सायं जुहोती'ति केचित्। अपरे तु 'अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहे'ति मन्त्रवर्ण एवाग्निरूपदेवताप्रापकः।**

**नन्वग्नेर्मान्त्रवर्णिकत्वे प्रजापतिदेवतया बाधः स्यात्। मन्त्रवर्णस्य चतुर्थीतो दुर्बलत्वात्। यथाहुः–'तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन वा पुनः। देवताया विधिस्तत्र दुर्बलं तु परं परमि'ति चेन्न। 'यदग्नये च प्रजापतये च सायं जुहोती'त्यत्र न केवलं प्रजापतिविधानम्, किन्तु मन्त्रवर्णप्राप्तमग्निमनूद्य तत्समुच्चितप्रजापतेः। एवं च न बाधः, केवलप्रजापतिविधानाभावात्। न चात्र समुच्चितोभयविधानमेव**

१. अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोति, सूर्यो ज्योतिर्ज्योतिः सूर्यःस्वाहेति प्रातः इति विहितेन मन्त्रेण प्राप्तत्वात् देवता न विधेया। ततोऽग्निसूर्यदेवताकस्य सायंप्रातःकालयोर्नियमेन अनुष्ठेयस्य कर्मणः अग्निहोत्रमिति यौगिकं नामधेयम्। योगश्च बहुव्रीहिणा दर्शितः॥ जैमिनि० न्या० मा० विस्तर पृ० ४५.

**कथं नेति वाच्यम्। समुच्चितोभयविधानापेक्षयाऽन्यतः प्राप्तमग्निमनूद्य तत्समुच्चितप्रजापतिमात्रविधाने लाघवात्।**

**एवं प्रयाजेषु समिदादिदेवतानां 'समिधः समिधो अग्न आज्यस्य व्यन्त्वि'त्यादिमन्त्रवर्णेभ्यः प्राप्तत्वात्, 'समिधो यजती'त्यादिषु समिदादिशब्दास्तत्प्रख्यशास्त्रात् कर्मनामधेयम्।**

( देवतावाचक ) वह दूसरा शास्त्रवाक्य कौन-सा है, ऐसी शंका होने पर कुछ के अनुसार वह मन्त्र—यदग्नये च प्रजापतये च सायं जुहोति—यह है, और दूसरों के अनुसार—अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा—यह मन्त्रवर्ण ही अग्निरूपदेवता का बोधक है।

यदि शङ्का हो कि अग्नि मन्त्रवर्ण से ज्ञात होता है अतः उसका प्रजापति देवता से बाध होना चाहिये, क्योंकि मन्त्रवर्ण चतुर्थी से दुर्बल होता है, जैसा कहा गया है कि—तद्धित, चतुर्थी अथवा मन्त्रवर्ण से देवता का विधान होता है। इनमें उत्तरोत्तर क्रमशः दुर्बल होता है।' तो उत्तर है कि नहीं। 'यदग्नये च०' आदि मन्त्र में केवल प्रजापति का ही विधान नहीं है, अपितु मन्त्रवर्ण से प्राप्त अग्नि का अनुवाद करके उसके सहित प्रजापति का विधान है। इस प्रकार बाध नहीं हुआ, क्योंकि केवल प्रजापति के ही विधान का अभाव है। "इसमें एक साथ वाले दोनों का ही विधान क्यों न हो," यह भी नहीं कहा जा सकता क्योंकि सम्मिलित दोनों के विधान की अपेक्षा दूसरे प्रापक वाक्य से प्राप्त अग्नि का अनुवाद करके उससे युक्त प्रजापति का ही विधान करने में गौरव नहीं होगा।

इसी प्रकार प्रयाजों में भी 'समिधः समिधो०' आदि मन्त्रवर्णों से ही समिद् आदि देवताओं के प्राप्त होने से 'समिधो यजति' इत्यादि वाक्यों में समिद् आदि शब्द तत्प्रख्यशास्त्र से कर्म के नामधेय होते हैं।

**देवतारूपेणाग्निप्रापकं शास्त्रं पृच्छति**—किमिति। **केषांचिन्मतानुसारेणोत्तरमाह**—यदग्नये चेति। **अत्राग्निर्ज्योतिरित्यादिमन्त्रवर्णप्राप्तमग्निमनूद्य तत्समुच्चितप्रजापतिमात्रविधाने लाघवं तदुभयसमुच्चितस्यैवात्र विधाने गौरवमिति च समुच्चितोभयविधानं 'यदग्नये च प्रजापतये च सायं जुहोती'त्यत्र स्वीकर्तव्यमित्यस्वरसबीजं केचिदित्यनेन सूचितम्। अधुना सिद्धान्तमतेनोत्तरमाह**—अपरे त्विति। **किंच 'अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोती'ति विहितेन मन्त्रेण प्राप्तमग्निमनूद्य, तत्समुच्चितस्य प्रजापतेः 'यदग्नये च प्रजापतये च सायं जुहोती'त्यत्र सायंकालेऽग्निहोत्रदेवतात्वं विधीयते। 'सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातर्जुहोती'ति विहितेन च मन्त्रेण प्राप्तं सूर्यमनूद्य तत्समुच्चितस्य च तस्य 'यत्सूर्याय च प्रजापतये च प्रातर्जुहोती'त्यत्र प्रातःकालेऽग्निहोत्रदेवतात्वं विधीयते। तेनाग्नेर्मान्त्रवर्णिकत्वे प्रजापतिविधेरेकेनैव वाक्येन सिद्धेः 'यदग्नये च प्रजापतये च सायं जुहोति, यत्सूर्याय च प्रजापतये च प्रातर्जुहोती'त्यत्र वाक्यद्वयं व्यर्थमिति निरस्तम्। सायं होमेऽग्निसमुच्चितस्य प्रजापतेर्विधानं प्रातर्होमे सूर्यसमुच्चितस्य च तस्यैकेन वाक्येन कर्तुमशक्यत्वादित्यलं विस्तरेण अधिकं तु न्यायप्रकाशे द्रष्टव्यम्। नन्वग्नेर्मान्त्रवर्णिकत्वे प्रजापतिना तस्य बाधः स्यात्प्रजापतेश्चतुर्थ्या देवतारूपेण प्राप्तत्वेन प्रबलत्वात्। अग्नेस्तु मन्त्रवर्णप्राप्तत्वेन दुर्बलत्वाच्च। न च 'सास्य देवते'ति तद्धितप्रत्ययस्य देवतात्वे स्मरणवच्चतुर्थी न देवतात्वे स्मर्यते 'संप्रदाने चतुर्थी'ति संप्रदानमात्रे तस्याः स्मरणात्। तस्मात्प्रजापतिना कथमग्नेर्बाधः स्यादिति वाच्यम्। त्यज्यमानद्रव्यो-**

द्देश्यत्वे सति प्रतिग्रहीतृत्वस्य संप्रदानपदार्थत्वेन त्यज्यमानद्रव्योद्देश्यत्वरूपस्य देवतात्वस्य-संप्रदानस्वरूपान्तर्गतत्वात् । ततश्चतुर्थीतः संप्रदानैकदेशतया देवतात्वप्रत्ययो भवत्येव, मन्त्रवर्णात्तु न देवतात्वप्रतीतिरस्ति किंत्वधिष्ठानत्वमेव ततः प्रतीयते । तस्मान्मन्त्रवर्णश्चतुर्थीतो दुर्बल एव ।

तथा च प्रबलप्रमाणबोधितप्रजापतिदेवतया दुर्बलप्रमाणबोधिताग्नेर्बाधो दुर्वार एवेत्याशयेन शङ्कते—नन्विति । तत्र संमतिमाह—यथाहुरिति । तत्रेति । तद्धितादिषु मध्य इत्यर्थः । परमिति । तद्धितापेक्षया चतुर्थ्या दौर्बल्यं चतुर्थ्यपेक्षया च मन्त्रवर्णस्य दौर्बल्यं भवतीति परं परं दुर्बलं बोध्यमित्यर्थः । ततः परमिति पाठे तु ततस्ततः परं दुर्बलप्रमाणमिति वीप्सापरत्वेन व्याख्येयम् । यदि च 'प्रजापतये जुहोती'ति केवलप्रजापति-विधानं स्यात्तदा तु भवेदपि प्रजापतिनाग्नेर्बाधः परंतु न तथा विधानं क्रियत इति परि-हरति—यदग्नये चेत्यादिना । प्रजापतेरित्यत्र विधानमित्यस्यानुषङ्गः । एवंचेति । मन्त्रवर्णप्राप्तमग्निमनूद्य तत्समुच्चितस्य प्रजापतेर्विधाने चेत्यर्थः । न बाध इति । न प्रजापतिनाग्नेर्बाध इत्यर्थः । तत्र हेतुमाह—केवलेति । ननु यदग्नये च प्रजापतये चेत्य-स्मिन्वाक्ये होमानुवादेन समुच्चितस्यैवोभयस्य विधानं क्रियत इति कथं न स्वीक्रियत इत्याशङ्क्य तयोः समुच्चितयोर्विधानापेक्षया मन्त्रवर्णतः प्राप्तमग्निमनूद्य लाघवेन तत्स-मुच्चितप्रजापतेर्विधानमेवोचितमिति परिहरति—न चेत्यादिना ।

तत्प्रख्यशास्त्रान्नामधेयत्वे उदाहरणान्तरमाह—एवमिति । समिदादिशब्दा इत्यत्रादि-पदेन तनूनपातादयः शब्दा गृह्यन्ते ।

'अग्निहोत्रं जुहोति' को यह कहकर गुणविधि नहीं स्वीकार किया गया कि आधार और देवता का बोधक गुणवाक्य पहले से प्राप्त है । आधारबोधक मन्त्र 'यदाहवनीये जुहोति' तो ग्रन्थ के मूल में उद्धृत है किन्तु देवता का विधायक मन्त्र वहाँ नहीं है । अतः यह जिज्ञासा स्वाभाविक है कि वह मन्त्र कौन सा है जिससे अग्निहोत्र के देवता का विधान होता है । ग्रन्थकार ने दो मन्त्रों को उद्धृत किया है जिनमें से शबर आदि मीमांसाचार्य एक को—'यदग्नये च प्रजापतये च०' आदि मन्त्र को अग्निहोत्र के देवता का विधायक मानते हैं और शास्त्रदीपिकाकार आदि 'अग्नि-र्ज्योतिर्ज्योतिरग्निः' आदि को । अर्थसंग्रहकार का मत बाद वाला ही है ।

यहाँ एक प्रश्न यह उठता है कि 'अग्निर्ज्योतिः' आदि मन्त्र से अग्निदेवतारूप गुण का विधान मानने पर 'यदग्नये च प्रजापतये च०' आदि मन्त्र में प्रयुक्त चतुर्थ्यन्त 'प्रजापतये' से अग्नि का बाध हो जायेगा, क्योंकि तद्धित प्रत्यय, चतुर्थी और मन्त्रवर्ण से देवता का ज्ञान होता है, जिनमें अपने-अपने से पूर्ववर्ती परवर्ती से प्रबल हैं । 'प्रजापतये' चतुर्थ्यन्त है और 'अग्निः ज्योति' आदि में अग्नि प्रथमा एकवचन में है और मन्त्रवर्ण से ज्ञात है । इस प्रकार उसे प्रजापति से बाधित हो जाना चाहिये । मन्त्रवर्ण 'मन्त्र में प्रयुक्त देवताज्ञापक वह शब्द है जो चतुर्थ्यन्त न होकर प्रथमान्त आदि होता है । मन्त्रवर्ण और चतुर्थ्यन्त का उदाहरण सामने ही है । तद्धित प्रत्यय से देवता-बोध का उदाहरण प्राजापत्यम्, गाणपतम् आदि है । अग्नि, इन्द्र आदि शब्दों में 'साऽस्य देवता' सूत्र ( पा० ४।२।२४ ) के अनुसार अण् आदि प्रत्यय लगाकर आग्नेय, ऐन्द्र आदि पदबना जिनका अर्थ है, वह याग जिसके देवता अग्नि हैं, इन्द्र हैं आदि ।

पूर्वपक्षी का उत्तर इस रूप में दिया जाता है कि 'यदग्नये च प्रजापतये' आदि मन्त्र से केवल प्रजापति देवता की ही प्राप्ति नहीं होती है, अपितु 'अग्निः ज्योतिः' आदि से विहित अग्नि का अनुवाद भी । अतः बाध नहीं होगा, क्योंकि यदि बाध अपेक्षित होता तो केवल प्रजापति अकेले

का ही विधान होता। यहाँ तो अग्नि से युक्त प्रजापति के विधान का अर्थ ही यह है कि अग्नि का बाध नहीं होगा, अपितु जहाँ प्रजापति का प्रधानरूप से विधान होगा वहाँ भी अग्नि का समावेश रहेगा ही। किन्तु इस मन्त्र में अग्नि का केवल अनुवाद होता है, वास्तविक विधान तो 'अग्निर्ज्योतिः' आदि मन्त्र के मन्त्रवर्ण से ही होता है। 'यदग्नये०' आदि में अग्नि का अनुवाद-मात्र होने पर भी प्रजापति से उसका विरोध नहीं। यदि उसे विरोध ही करना होता तो दोनों को साथ न रखा गया होता।

'यदग्नये' आदि मन्त्र अग्नि और प्रजापति का पृथक्-पृथक् विधान नहीं करता। ऐसा करने पर पहले तो एक ही मन्त्र से दो-दो देवताओं के विधान का बोझा पड़ेगा, दूसरे 'अग्निर्ज्योतिः' आदि मन्त्र बेकार हो जायेंगे। ऐसी दशा में 'अग्निर्ज्योतिः०' आदि से अग्नि का तथा 'यदग्नये०' आदि से अग्नियुक्त प्रजापति का विधान मानने में ही लाघव है।

प्रयाजों में भी 'समिद्' आदि शब्दों को इसी प्रकार तत्प्रख्यशास्त्र से ही याग का नामधेय माना जाता है, क्योंकि उनके उपयोगी काष्ठ आदि गुणों का बोध कराने वाले "समिधः समिधो" आदि मन्त्र हैं।

## तद्व्यपदेशेन कर्मनामधेयत्वम्

**( ५५ ) 'श्येनेनाभिचरन्यजेते'त्यत्र श्येनशब्दस्य कर्मनामधेयत्वं तद्व्यपदेशात्। तेन व्यपदेशादुपमानात्तदन्यथानुपपत्तेरिति यावत्। तथा हि यद्विधेयं तस्य स्तुतिर्भवति। यद्यत्र श्येनो विधेयः स्यात्, तदार्थवादैस्तस्यैव स्तुतिः कार्या। अत्र 'यथा वै श्येनो निपत्यादत्त एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्त' इत्यनेनार्थवादेन श्येनः स्तोतुं न शक्यः, श्येनोपमानेनार्थान्तरस्तुतेः क्रियमाणत्वात्।**

**न च श्येनोपमानत्वेन स एव स्तोतुं शक्यते, उपमानोपमेयभावस्य भिन्ननिष्ठत्वात्। यदा तु श्येनसंज्ञको यागो विधीयते तदार्थवादेन श्येनोपमानेन तस्य स्तुतिः कर्तुं शक्यत इति श्येनशब्दः कर्मनामधेयं तद्व्यपदेशादिति।**

'श्येनेन अभिचरन् यजेत' इस वाक्य में श्येनशब्द की कर्मनामधेयता 'तद्व्यपदेश' के कारण है। ( तद्व्यपदेशात् एक समस्तपद है जिसका विग्रह है—'तेन व्यपदेशात्'—यहाँ 'तेन' पद मन्त्र में प्रयुक्त उस शब्द का द्योतक हैं जिसको नामधेय मानना है। अतः तद्व्यपदेश का अर्थ हुआ ) उसके साथ व्यपदेश अर्थात् उपमान होने से, ऐसा न मानने पर अर्थसंगति नहीं हो सकेगी। जैसे कि जिसका विधान अपेक्षित होता है, उसकी स्तुति होती है। यदि यहाँ श्येन ( बाजपक्षी ) विधेय होगा तो अर्थवादों से उसी की स्तुति की जायेगी। यहाँ "जिस प्रकार बाजपक्षी अपने लक्ष्य को झपट कर ग्रहण कर लेता हैं, उसी प्रकार यह याग भी अपकारी शत्रु को झपट कर मार देता है" इस अर्थवाद वाक्य से श्येनपक्षी की स्तुति संभव नहीं, क्योंकि यहाँ श्येन की उपमा होने से दूसरे ही पदार्थ की स्तुति की जा रही हैं।

श्येन की उपमा से उसी ( श्येन ) की ही स्तुति नहीं की जा सकती क्योंकि उपमान और उपमेय से ज्ञात पदार्थ पृथक् पृथक् होते हैं। जब श्येन नामक याग का विधान किया जाता है तब अर्थवाद वाक्य द्वारा श्येन की उपमा देकर उसकी स्तुति की जा सकती हैं, इस प्रकार श्येन शब्द 'तद्व्यपदेश' से कर्म का नामधेय है।

**इदानीं चतुर्थनिमित्तेन तद्व्यपदेशरूपेण श्येनशब्दस्य कर्मनामधेयत्वं प्रदर्शयति— श्येनेति। कर्मनामधेयत्वमिति। नन्वत्र श्येनशब्दस्य कर्मनामधेयत्वं न भवति, किंतु**

**सोमयागे नित्यं सोमद्रव्यं बाधित्वा तस्य स्थाने पक्षिद्रव्यरूपो गुणः काम्यो विधीयते, तथा सति श्येनशब्दस्य पक्षिणि लोकप्रसिद्धा रूढिरुपपन्ना भवतीत्याशङ्क्य श्येनशब्दस्य कर्मनामधेयत्वे हेतुमाह—तद्व्यपदेशादिति । तद्व्यपदेशशब्दं व्याचष्टे—तेनेति । श्येनेत्यर्थः । तदिति । उपमानोपमेयभावस्य भेदघटितत्वादेवार्थवादवाक्ये श्येनोपमानेन विधेयस्तुतेः श्येननामककर्मविशेषं विनानुपपत्तेर्नात्र पक्षिद्रव्यरूपो गुणो विधातुं शक्यत इति भावः । तदन्यथानुपपत्तिमेवोपपादयति—तथाहीत्यादिना । यदिति । विधेयस्य स्तुतेः कर्तव्यत्वादित्यर्थः । अत्रेति । श्येनेनाभिचरन्यजेतेत्यत्रेत्यर्थः । श्येन इति । श्येननामकपक्षिविशेष इत्यर्थः । तस्यैवेति । श्येननामकपक्षिविशेषस्यैवेत्यर्थः । यथेति । यथा श्येनः पक्षिविशेषो निपत्य मत्स्यादीञ्जन्तूनादत्ते एवमयं श्येननामको यागो द्विषन्तं भ्रातृव्यं शत्रुं निपत्यादत्त इत्यर्थः । यमभिचरति श्येनेनेति वाक्यशेषः । अत्रेति । अत्र प्रकृतेऽनेन श्येनार्थवादेन श्येनः पक्षिविशेष एव स्तोतुं न शक्यते इत्यर्थः । तत्र हेतुमाह—श्येनेति ।**

**ननु श्येनार्थवादोपमानेन श्येन एव पक्षिविशेषः कथं न स्तोतुं शक्यः स्यादित्यत आह—न च श्येनोपमानत्वेनेति । तदशक्यत्वे हेतुमाह—उपमानेति । यद्यत्र श्येनसंज्ञकस्य यागस्य विधेयत्वं स्वीक्रियते तदा तादृशार्थवादोपमानेन तस्य श्येनसंज्ञकस्य यागस्य स्तुतिः कर्तुं शक्या भवत्येवेत्याह—तदेत्यादिना । फलितमुपसंहरति—इतीति । एवमुक्तेन प्रकारेणेत्यर्थः ।**

यहाँ एक भिन्न प्रकार का वाक्य प्रस्तुत करके उसमें आये शब्द को गुणवाचक न मानकर उसे याग का नाम बतलाया गया है और कारण भी पहलों से भिन्न प्रदर्शित किया गया है । उपस्थापित वाक्य है—श्येनेनाभिचरन् यजेत—अर्थात्—श्येन नामक याग से अभिचार का आकांक्षी लक्ष्य प्राप्त करे । श्येन-याग सोमयाग की एक विकृति है । पूर्वपक्षी के अनुसार श्येन शब्द को बाजपक्षीरूप द्रव्य का वाचक मानना चाहिये और पूरे वाक्य को गुणविधि, किन्तु सिद्धान्त पक्ष के अनुसार ऐसा मानना संभव नहीं है क्योंकि श्येन की उपमा देकर विधेय कर्म की प्रशंसा अर्थवाद वाक्यों में की गयी है । इससे सिद्ध होता है कि श्येनयाग—विधेयकर्म-भिन्न है और श्येन नामक पक्षी भिन्न । विधेयकर्म उपमेय है और श्येनपक्षी उपमान है । उपमेय और उपमान सदा दो भिन्न पदार्थ ही होते हैं । एक ही वस्तु उपमेय और उपमान नहीं कही जा सकती । इससे सिद्ध होता है कि औपम्य के आधार पर श्येन नामक कर्मविशेष को यदि श्येन नामक पक्षी से भिन्न नहीं माना गया तो सादृश्य का कथन सङ्गत नहीं होगा, अतः यहाँ "श्येनेनाभिचरन्०" में श्येन को पक्षिद्रव्यरूप गुण नहीं माना जा सकता । यही अन्यथानुपपत्ति का अर्थ है ।

इसी नामधेयत्व के हेतु को 'तद्व्यपदेश' कहा जाता है । मूल पंक्तियों में 'तद्' और 'व्यपदेश' दोनों का समासविग्रह और अर्थ स्पष्ट किया गया है[1] । श्येन से सम्बद्ध अर्थवाद वाक्य यह है—यथा वै श्येनो निपत्य आदत्ते, एवम् अयम् द्विषन्तं भ्रातृव्यं निपत्य आदत्ते । यहाँ 'श्येन' पक्षी का बोधक है और उपमान है, तथा 'अयम्'-याग का बोधक है और उपमेय है । यदि दोनों को भिन्न भिन्न नहीं माना गया तो सादृश्य कैसे प्रदर्शित किया जा सकेगा । इस अर्थवाद वाक्य में प्रदर्शित सादृश्य तभी सङ्गत होगा जब कि 'श्येनेनाभिचरन् यजेत' में श्येन को यागविशेष का वाचक माना जाये ।[2] सम्पूर्ण भाव को तन्त्रवार्तिक के एक श्लोक में व्यक्त कर दिया गया है—

---

१. तेन श्येनादिना व्यपदेशः सादृश्यं यस्य कर्मणस्तत् तद्व्यपदेशम् । यतः कर्म तद्व्यपदेशं श्येनादिसदृशमतः श्येनादिशब्दाः कर्मनामधेयानीति । प्रतिपादिका पृ० १२७.

२. "यथा वै श्येनो निपत्यादत्ते, एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्ते यमभिचरति श्येनेन"

विधेयं स्तूयते वस्तु भिन्नयोपमया सदा ।
न हि तेनैव तस्यैव स्तुतिर्स्तद्वदितीष्यते ॥

कर्मनामधेयत्वे उत्पत्तिशिष्टगुणबलीयस्त्वम्

**( ५६ ) उत्पत्तिशिष्टगुणबलीयस्त्वमपि पञ्चमं नामधेयनिमित्तमिति केचित् । यथा 'वैश्वदेवेन यजेते'त्यादौ । अत्रोत्पत्तिशिष्टाग्नचादीनां बलीयस्त्वाद्वैश्वदेव-शब्दस्य विश्वदेवदेवताभिधायकत्वं न संभवतीति कर्मनामधेयत्वम् ।**

**वस्तुतस्तु तत्प्रख्यशास्त्रादेवास्य कर्मनामधेयत्वं प्रकृतयागे विश्वदेवरूपगुण-संप्रतिपन्नशास्त्रस्यार्थवादरूपस्यैव सत्त्वात् । 'यद्विश्वेदेवाः समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्वम्' इति ।**

उत्पत्ति विधि से बोधित गुण की प्रबलता भी नामधेय का पञ्चम निमित्त है, ऐस कुछ लोगों का मत है, जैसे—वैश्वदेवेन यजेत-आदि वाक्यों में । इस वाक्य में उत्पत्तिविधि के द्वारा बोधित अग्नि आदि देवताओं की प्रबलता के कारण वैश्वदेवशब्द विश्वदेव नामक देवता का वाचक नहीं हो सकता, अतः कर्मविशेष का नाम कहा जाता है ।

किन्तु सत्य स्थिति यह है कि 'तत्प्रख्यशास्त्र' से ही इसकी कर्मनामधेयता सिद्ध हो जाती है क्योंकि वर्तमान याग में विश्वदेव रूप का बोधक वाक्य अर्थवाद वाक्य के रूप में विद्यमान है । ( वह अर्थवाद वाक्य है— ) 'यद् विश्वेदेवाः समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्वम् ।'

अत्र कर्मनामधेयत्वे चोत्पत्तिशिष्टगुणबलीयस्त्वं पञ्चममपि निमित्तं भवतीति केषांचिन्मतमाह—उत्पत्तिशिष्टेति । तत्रोदाहरणमाह—यथेति । अत्रेति । अस्मिन्वाक्ये वैश्वदेवशब्दस्य विश्वदेवदेवताविधायकत्वं न संभवत्युत्पत्तिशिष्टाग्न्यादीनां बलीयस्त्वादित्यन्वयः । फलितार्थमुपसंहरति—इतीति । तस्येति शेषः । अत्रेदं बोध्यम्—चातुर्मास्ये चत्वारि पर्वाणि—वैश्वदेवो वरुणप्रघासः साकमेधः शुनासीरीयश्चेति । तेषु प्रथमे पर्वण्यष्टौ यागा विहिताः—आग्नेयमष्टाकपालं निर्वपति, सौम्यं चरुं, सावित्रं द्वादशकपालं, सारस्वतं चरुं, पौष्णं चरुं, मारुतं सप्तकपालं, वैश्वदेवीमामिक्षां, द्यावापृथिव्यमेककपालमिति । तेषामष्टानां संनिधाविदमाम्नायते—वैश्वदेवेन यजेतेति । अत्र चाग्नेयादीन् यागान् यजेतेत्यनूद्य वैश्वदेवशब्देन देवतारूपो गुणस्तेषु विधीयते । यद्यपि वैश्वदेव्यामामिक्षायां विश्वेदेवाः प्राप्तास्तथाप्याग्नेयादिषु सप्तसु यागेष्वप्राप्तत्वाद्विधीयन्ते । तेष्वप्यग्न्यादिदेवताः सन्तीति चेत्तर्हि गत्यभावात्तेषु देवता विकल्प्यन्ताम् । नामधेयत्वे तु नाममात्रस्याविधेयत्वाद् द्रव्यदेवतयोरभावेन यागस्यात्र स्वरूपासंभवाच्छ्रूयमाणो विधिरनर्थकः स्यात्तस्माद् गुणविधिरिति पूर्वपक्षः । उत्पत्तिवाक्यैर्विहितानाग्नेयादीनष्टौ यागान् यजेतेत्यनूद्याष्टानां सङ्घे वैश्वदेवशब्दो नामत्वेनोपवर्ण्यते । न च विधित्वाभावेऽपि नामोपदेशस्य वैयर्थ्यमिति वाच्यम् । 'प्राचीन-

---

इति वाक्येनोक्त उपमानोपमेयभावः पक्षिण्येकस्मिन्न युज्येत । तस्मात् पक्षिण उपमानस्य गुण उपमेये कर्मण्यस्तीति श्येनशब्दस्य अभिचारकर्मनामत्वम्" । 'संदंशेनाभिचरन् यजेत' 'गवाऽभिचर्यमाणो यजेत' इत्यत्र संदंशगोशब्दयोर्नामत्वम्श्येनशब्दवत् द्रष्टव्यम् । जैमिनि न्या० मा० विस्तर पृ० ४६-४७.

प्रवणे वैश्वदेवेन यजेते'त्यादिषु वैश्वदेवशब्देनैकेनैवाष्टानां सङ्घस्य व्यवहर्तव्यत्वेनार्थवत्त्वोपपत्तेः । नामप्रवृत्तिनिमित्तभूता निरुक्तिस्तु द्विधा । आमिक्षायागे विश्वेषां देवानामिज्यमानतया तत्सहचरितानां सर्वेषां छत्रिन्यायेन वैश्वदेवत्वमिति, विश्वेदेवा अष्टानां कर्तार इति वा तेषां वैश्वदेवत्वम् । तथा च ब्राह्मणं 'यद्विश्वेदेवाः समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्व'मिति । देवताविकल्पस्तु समानबलत्वाभावान्न युज्यते, अग्न्यादय उत्पत्तिशिष्टत्वात् प्रबलाः विश्वेदेवा उत्पन्नशिष्टत्वाद् दुर्बलाः तस्माद्वैश्वदेवशब्दः कर्मनामधेयमिति सिद्धान्तः ।

वस्तुगतिमाश्रित्य तत्प्रख्यशास्त्रादेव वैश्वदेवशब्दस्य कर्मनामधेयत्वमाह—वस्तुतस्त्विति । प्रकृतयाग इति । वैश्वदेवनामकेऽष्टानामाग्नेयादीनां सङ्घात्मके प्रकृतयाग इत्यर्थः । विश्वदेवेति । प्रकृतयागे विश्वदेवरूपगुणः संप्रतिपन्नः संप्राप्तो यस्मात्तादृशशास्त्रस्येत्यर्थः । तत्र गुणप्रापकं शास्त्रमुदाहरति—यद्विश्वेदेवा इति । अस्य शास्त्रस्य कर्तृरूपेण प्रकृते यागे विश्वदेवरूपगुणप्रापकत्वमिति भावः । नामधेयस्य प्रयोजन तु सर्वत्र व्यवहार एव । न ह्यन्तरेण नामधेयमृत्विग्वरणादिष्वनेनाहं यक्ष्य इत्याख्यानोपायो लघुः कश्चिदस्ति, तस्माद्वैश्वदेवादिशब्दानां कर्मनामधेयत्वमेवेति सिद्धम् ।

नामधेय के चार ही निमित्त स्वीकार किये जाते हैं । कुछ पूर्वपक्षियों का कहना है कि कहीं-कहीं देवता आदि गुण के वाचक शब्दों को इसलिये नामधेय मान लेना चाहिये क्योंकि उत्पत्तिविधि वाक्यों द्वारा पहले से ही गुण का ज्ञापन कर दिये जाने से नई गुणविधि की आवश्यकता नहीं रह जाती । स्वतन्त्र रूप से उत्पत्तिविधि के द्वारा बोधित होने वाला गुण अन्य रीतियों से बाद में ज्ञात गुण से प्रबल पड़ता है । यही 'उत्पत्तिशिष्टगुणबलीयस्त्व' का अर्थ है । जब गुण का ज्ञान उत्पत्तिविधि से हो गया हो, तब उसी के बोधक अन्य शब्दों को स्वीकार करने से पुनरुक्तिदोष तथा अनपेक्षित की अपेक्षा का दोष हो जायेगा । अतः अच्छा हो कि उत्पत्ति से ज्ञात गुणशब्द से दूसरे गुण का बाध कर दिया जाये और निरर्थकता से बचाने के लिये उसे याग का नाम स्वीकार कर लिया जाये । उदाहरण के लिये वे 'वैश्वदेवेन यजेत' वाक्य में 'वैश्वदेव' को लेते हैं ।

पूर्वपक्ष के द्वारा प्रस्तुत उदाहरण का प्रसंग इस प्रकार है । एक चातुर्मास याग होता है जिसके चार पर्व कहे जाते हैं—वैश्वदेव, वरुणप्रघास, साकमेध तथा शुनासीरीय । इनमें से प्रथम पर्व–वैश्वदेव–में आठ यज्ञ विहित हैं—अग्निदेव से सम्बद्ध अष्टाकपाल याग, सोम से सम्बद्ध चरु, सवितृ से सम्बद्ध द्वादश-कपाल याग, सरस्वती से सम्बद्ध चरु, पूषन् देवता का चरु, मरुत् देवता का सप्तकपाल, वैश्वदेव की आमिक्षा और द्यावापृथिवी का एककपाल याग । इन आठों यागों के पास ही 'वैश्वदेवेन यजेत' यह वाक्य पठित है । 'आग्नेयं अष्टाकपालं निर्वपति' आदि उत्पत्ति वाक्य हैं जिनसे विहित आग्नेय आदि आठों यागों का यजन प्राप्त है । अतः 'वैश्वदेवेन यजेत' में 'यजेत' का पूर्वतः अनुवाद और वैश्वदेव को आठों यागों का सामूहिक नाम मान लेना चाहिये । इस प्रकार वैश्वदेवशब्द देवता का वाचक न होकर आठों यागों का वाचक होगा ।[1] दूसरी बात यह है

---

१. चातुर्मास्यस्य यागस्य चत्वारि पर्वाणि–वैश्वदेवः, वरुणप्रघासः, साकमेधः, शुनासीरीयश्चेति । तेषु प्रथमे पर्वण्यष्टौ यागा विहिताः 'आग्नेयमष्टाकपालं निर्वपति, सौम्यं चरुम्, सावित्रं द्वादशकपालम्, सारस्वतं चरुम्, पौष्णं चरुम्, मारुतं सप्तकपालं, वैश्वदेवीमामिक्षाम्, द्यावापृथिव्यमेककपालम् इति । तेषामष्टानां यागानां सन्निधाविदमाम्नायते 'वैश्वदेवेन यजेत' इति । उत्पत्तिवाक्यविहितानाग्नेयादीनष्टौ यागान् 'यजेत' इत्यनूद्याष्टानां संघे वैश्वदेवशब्दो नामत्वेनोपवर्ण्यते । जैमिनि न्या० मा० वि० पृ० ५२.

कि 'वैश्वदेव' शब्द से देवता अर्थ ही हो सकता है द्रव्यादि नहीं। प्रत्येक याग का देवता उत्पत्ति-वाक्य से बतला ही दिया गया है अतः वैश्वदेवशब्द की देववाचकता भी अभीष्ट न होने पर उसकी अनर्थकता सिद्ध होने लगेगी, जो दोष है, अतः उस दोष से बचने के लिये 'वैश्वदेव' को याग का नाम मान लेना ही श्रेयस्कर है। तीसरी बात यह है कि 'वैश्वदेवीम् आमिक्षाम्' कहकर आमिक्षा का देवता वैश्वदेव को पहले कह दिया गया है, अतः पुनः वाक्यांतर से उसको ही देवता कहना अनुचित होगा। इससे स्पष्ट है कि 'वैश्वदेव' को देवतारूप गुण का वाचक इसी लिये नहीं माना जा सका क्योंकि उत्पत्तिविधियों से उपदिष्ट देवतारूप गुण का ग्रहण इसका बाधक है, अत उसकी प्रबलता है। उसकी प्रबलता के कारण ही 'वैश्वदेव' को याग का वाचक मानना पड़ रहा है, अतः 'उत्पत्ति विधिशिष्टगुणबलीयस्त्व' को भी नामधेय का एक हेतु मानना चाहिये।

उक्त समस्त तर्क पूर्वपक्ष है। किन्तु सिद्धान्त यह है कि जिसे 'उत्पत्तिशिष्टगुणबलीयस्त्व' कहा जा रहा है वह कोई स्वतन्त्र निमित्त नहीं है, अपितु उसका अन्तर्भाव पूर्ववर्णित एवं सर्वस्वीकृत 'तत्प्रख्यशास्त्र' नामक हेतु में हो जाता है। 'वैश्वदेव' शब्द 'तत्प्रख्यशास्त्र' से ही याग का नाम है। प्रकृतयाग अर्थात् चर्चित आठ यागों के समूह से सम्बद्ध एक अर्थवाद वाक्य है, उसी से देववाचक विश्वदेव गुण की प्राप्ति हो जाती है। अर्थवाद वाक्य–'यद्विश्वेदेवाः०' आदि का अर्थ है—'जो विश्वदेवों ने यजन किया वही वैश्वदेवों का 'वैश्वदेवत्व' है। इसका अभिप्राय यह हुआ कि 'वैश्वदेवेन यजेत' में वैश्वदेव शब्द याग का नाम इसलिये नहीं है क्योंकि उत्पत्तिविधि से निर्दिष्ट गुण प्रबल है, अपितु इसलिये है क्योंकि उसके देवतारूप गुण का बोधक अर्थवाद वाक्य 'यद्विश्वेदेवाः समयजन्त०' आदि प्राप्त है। अतः चार के अतिरिक्त पाँचवाँ कोई भी निमित्त नामधेय का नहीं है।

## निषेधविभागः

### अथ निषेधमीमांसा

**( ५७ ) पुरुषस्य निवर्तकं वाक्यं निषेधः, निषेधवाक्यानामनर्थहेतुक्रियानिवृत्तिजनकत्वेनैवार्थवत्त्वात्। तथा हि यथा विधिः प्रवर्तनां प्रतिपादयन् स्वप्रवर्तकत्वनिर्वाहार्थं विधेयस्य यागादेरिष्टसाधनत्वमाक्षिपन् पुरुषं तत्र प्रवर्तयति, तथा 'न कलञ्जं भक्षयेत्'इत्यादिनिषेधोऽपि निवर्तनां प्रतिपादयन् स्वनिवर्तकत्वनिर्वाहार्थं निषेध्यस्य कलञ्जभक्षणस्य परानिष्टसाधनत्वमाक्षिपन् पुरुषं ततो निवर्तयति।**

### लिङर्थशब्दभावनाया नञर्थेनान्वयः

**ननु निषेधवाक्यस्य कथं निवर्तनाप्रतिपादकत्वमिति चेदुच्यते। न तावदत्र धात्वर्थस्य नञर्थेनान्वयः, अव्यवधानेऽपि तस्य प्रत्ययार्थभावनोपसर्जनत्वेनोपस्थितेः। न ह्यन्योपसर्जनत्वेनोपस्थितमन्यत्रान्वेति, अन्यथा राजपुरुषमानयेत्यादावपि राज्ञः क्रियान्वयापत्तेः। अतः प्रत्ययार्थस्यैव नञर्थेनान्वयः। तत्रापि नाख्यातत्वांशवाच्यार्थभावनायास्तस्या लिङंशवाच्यप्रवर्तनोपसर्जनत्वेनोपस्थितेः, किन्तु लिङंशवाच्यशब्दभावनायाः, तस्याः सर्वापेक्षया प्रधानत्वात्।**

पुरुष को ( कर्मविशेष से ) मना करने वाला वाक्य निषेध है। निषेध-वाक्यों की सार्थकता इसी में है कि वे अनिष्ट की कारणभूत क्रियाओं से पुरुष को हटाते हैं। जिस प्रकार से

विधि-वाक्य प्रवृत्ति को प्रतिपादित करते हुये अपनी प्रवर्तकता के निर्वाह के लिये सम्पादनीय याग आदि में इष्टभूत ( स्वर्गादि ) की साधनता का आक्षेप करते हुए पुरुष को उनमें—यागादि में—प्रवृत्त करता है, उसी प्रकार 'कलञ्ज नहीं खाना चाहिये' इत्यादि निषेध भी निवृत्ति का प्रतिपादन करते हुए अपनी निवारकता के निर्वाह के लिये निषेध के विषय कलञ्जभक्षण में घोर ( नरकादि ) अनिष्ट की साधनता का आक्षेप करते हुए पुरुष को उससे हटाता है।

निषेधवाक्य की निवर्तना-प्रतिपादकता कैसे सिद्ध होती है, यह शंका हो तो उत्तर है—कि यहाँ धात्वर्थ का नञ् के अर्थ से अन्वय नहीं होता है, क्योंकि व्यवधान न रहने पर भी उस धात्वर्थ की उपस्थिति प्रत्यय की अर्थभूता भावना में विशेषण रूप में होती है। दूसरे के विशेषण के रूप में उपस्थित वस्तु उससे भिन्न से नहीं जुड़ती। अन्यथा तो 'राजपुरुष को लाओ' आदि वाक्यों में भी राजा का सम्बन्ध क्रिया से होने लगेगा। इसलिये प्रत्ययार्थ का ही नञर्थ से अन्वय होता है। वहाँ भी—अर्थात् प्रत्ययार्थ में भी—( नञर्थ से ) आख्यातत्व अंश से वाच्य आर्थीभावना का सम्बन्ध नहीं होता है क्योंकि वह तो लिङ्-अंश से वाच्य प्रवर्तना के विशेषण के रूप में उपस्थित होती है, अपितु लिङ् अंश से वाच्य शाब्दी-भावना से ही ( उसका अन्वय होता है ), क्योंकि वही ( शाब्दीभावना ही ) सबकी अपेक्षा प्रधान होती है।

**तदेवं मत्वर्थलक्षणादिनिमित्तचतुष्टयनिरूपणेन नामधेयस्य विधेयार्थपरिच्छेदकतयार्थवत्त्वं निरूपितम्। अधुना निषेधवाक्यानामर्थवत्त्वनिरूपणाय निषेधवाक्यं लक्षयति—**पुरुषस्य निवर्तकमिति। निषेधेति। **'न कलञ्जं भक्षयेत्' इत्यादिनिषेधवाक्यानामनर्थहेतुभूतायाः कलञ्जभक्षणादिक्रियायाः सकाशात् पुरुषस्य निवृत्तिजनकत्वेनैवार्थवत्त्वं न किंचित्कर्तव्यताप्रतिपादकत्वेनेति भावः, यथा विधिवाक्यानां स्वप्रवर्तकत्वान्यथानुपपत्त्या विधेयार्थस्य स्वर्गादिरूपेष्टसाधनत्वप्रत्यायनेन तत्र विधेयार्थे पुरुषप्रवृत्तिजनकत्वं तथा निषेधानामपि स्वनिवर्तकत्वान्यथानुपपत्त्या निषेध्यस्य पुरुषानिष्टसाधनत्वप्रत्यायनेन, ततः कलञ्जभक्षणादेः पुरुषनिवृत्तिजनकत्वमिति दृष्टान्तदार्ष्टान्तिकाभ्यां निषेधवाक्यानामनर्थहेतुक्रियायाः पुरुषनिवृत्तिजनकत्वेनैवार्थवत्त्वमुपपादयति—**तथा हीत्यादिना।

**ननु निषेधवाक्यानां निवर्तनाप्रतिपादकत्वं न संभवति, न भक्षयेन्न हन्तव्य इत्येवमादावव्यवधानेन नञर्थस्याभावस्य धात्वर्थेनान्वये सति धात्वर्थवर्जनकर्तव्यताया एव सर्वत्र वाक्यार्थत्वेन प्रतीयमानत्वात्। तथा च यथा यजेतेत्यादौ यागकर्तव्यता वाक्यार्थो भवति तथा 'न कलञ्जं भक्षयेत्' 'ब्राह्मणो न हन्तव्यः' इत्यादावपि तत्तद्धात्वर्थवर्जनकर्तव्यतैव वाक्यार्थो न निवर्तनेत्याशयेनाशङ्कते—**नन्विति। **नञर्थस्याभावस्य धात्वर्थेनाव्यवधानेऽपि धात्वर्थस्य प्रत्ययार्थभावनोपसर्जनत्वेनोपस्थितत्वान्न नञर्थेनान्वयः संभवति। अन्यत्रोपसर्जनत्वेनान्वितस्यान्यत्रोपसर्जनत्वेनान्वयायोगादिति परिहरति—**उच्यत इत्यादिना। अत्रेति। **'न कलञ्जं भक्षये' दित्यादावित्यर्थः।** अव्यवधानेऽपीत्यत्र **धात्वर्थस्य नञर्थेनेत्यनुषङ्गः।** तस्येति। **धात्वर्थस्येत्यर्थः। अन्योपसर्जनत्वेनोपस्थितस्याप्यन्यत्रोपसर्जनत्वेनान्वये को दोष इत्यत आह—**न हीति। **तत्र बाधकं दोषमाह—**अन्यथेति। **अन्यविशेषणत्वेनोपस्थितस्याप्यन्यत्र विशेषणत्वेनान्वयस्वीकारे पुरुषोपसर्जनत्वेनोपस्थितस्य राज्ञोऽपि क्रियोपसर्जनत्वेनान्वयापत्तेरित्यर्थः। धात्वर्थस्य नञर्थेनान्वयासंभवात् कलञ्जा-**

**दिपदार्थस्यापि कारकोपसर्जनत्वेनोपस्थितस्य तत्रान्वयासंभवाच्च परिशेषात्प्रत्ययार्थस्यैव नञर्थनान्वयो भवतीत्याह**—अत इति। **किंच प्रत्ययार्थोऽपि द्विविधो भवत्याख्याततवांशवाच्यार्थभावना लिङंशवाच्या शब्दभावना चेति, तयोर्मध्येऽपि नाख्याततवांशवाच्यभूताया अर्थभावनाया नञर्थेनान्वयः संभवतीत्याह**––तत्रापीति। **तत्र हेतुमाह**—तस्या इति। प्रवर्तनोपसर्जनत्वेनेति। **शब्दभावनाविशेषणत्वेनेत्यर्थः। लिङंशवाच्येत्यस्य लिङो योऽशो लिङ्स्वरूपो धर्मस्तद्वाच्येत्यर्थो बोध्यः। एवमग्रेऽपि। ननु 'न कलञ्जं भक्षये'दित्यादौ कलञ्जादिपदार्थस्य धात्वर्थस्य च नञर्थेनान्वयो भवतैव निरस्तः, प्रत्ययार्थस्याप्यर्थभावनारूपस्य नञर्थेनान्वयानङ्गीकारे प्रत्ययार्थत्वाविशेषाच्छब्दभावनाया अपि तेनान्वयासंभवेनानन्वितशब्दस्याप्रामाण्यापत्तिरित्याशङ्क्य परिहरति**–किंत्विति। **तत्र हेतुमाह**–तस्या इति। **प्रत्ययार्थत्वं न नञर्थेनान्वये प्रयोजकं किंतु सर्वापेक्षया मुख्यत्वेनोपस्थितत्वं, तच्च शब्दभावनायामबाधितमिति भावः।**

निषेध वेद के पाँच भागों में से चतुर्थ है। इसका सामान्य अर्थ है, 'मना करना'। यह वारणकर्म दो प्रकार का हो सकता है—एक तो श्रेयस्कर कर्म से और दूसरा अहितकर कर्म से। प्रथम प्रकार का कार्य कोई शत्रु ही कर सकता, और शास्त्रों की किसी से शत्रुता नहीं है, अतः उसके वाक्य उन्हीं कर्मों से पुरुष को मना करते हैं जिनसे अनर्थ होता है अर्थात् जो अनर्थ के साधन हैं। जो मनुष्य के जीवन का प्रयोजन या लक्ष्य हो सकता है, जिससे पुरुष का वस्तुतः कल्याण होता है, उसे अर्थ या पुरुषार्थ कहते हैं, जैसे स्वर्ग आदि। जो पुरुष को इष्ट नहीं हैं, जिनमें वह अपना कल्याण नहीं समझता उसे अनिष्ट या अनर्थ कहते हैं, जैसे नरक आदि।

विधिवाक्य पुरुष को स्वर्गादि इष्ट की प्राप्ति हेतु प्रेरित करते हैं और बतलाते हैं कि उन इष्टों के साधन याग आदि कर्म हैं, अतः उनको सम्पन्न करना चाहिये। इस प्रेरणा के कारण ही विधिवाक्यों का सार्थक्य है। निषेधवाक्यों की सार्थकता इसलिये है क्योंकि ये पुरुष को उन कर्मों से निवृत्त करते हैं जिनसे अनिष्ट की प्राप्ति हो सकती है अर्थात् इन वाक्यों से पहले कर्मविशेष को घोर अनिष्ट का साधन सिद्ध किया जाता है, तब पुरुष को उससे निवृत्त किया जाता है। जैसे कलञ्ज—विषाक्त बाण से मारे गये पशुपक्षी का मांस—खाने से प्राणत्याग आदि अनर्थ हो सकता है, अतः किसी भी व्यक्ति को उसका भक्षण नहीं करना चाहिये क्योंकि मरणरूप अनिष्ट का वह प्रबल साधन है। इस प्रकार विधिवाक्य जहाँ इष्ट के साधनभूत कर्मों में प्रवृत्त करके कल्याण-सम्पादन करते हैं, वहीं निषेधवाक्य अनिष्ट के साधनभूत कर्मों से निवृत्त करके।

निषेध का ज्ञापन नञ् से कराया जाता है जिसके अन्तिमवर्ण 'ञ्' का लोप करके सामान्यतः 'न' का प्रयोग किया जाता है। इसका निषेध के अर्थ में स्वतन्त्र प्रयोग भी होता है और सुबन्त के साथ समस्त भी।[1] उत्तर-पद रहते 'न' का 'अ' आदेश हो जाता है[2] और अजादि उत्तर-पद रहते अन्।[3] इस के 'न कलञ्जं भक्षयेत्' 'अब्राह्मणः' और 'अनश्वः' आदि क्रमशः उदाहरण हैं। अब प्रश्न यह है कि निवर्तना का बोध कराने के लिये निषेधार्थक नञ् का योग निषेधवाक्य में किससे किया जाता है? उत्तर स्पष्ट है कि विधि अथवा प्रवर्तना का ज्ञान क्रियापद के जिस लिङ् अंश से होता है, निवर्तना के ज्ञान के लिये उसी से नञ् का योग होना चाहिये। भ्रमनिवारणार्थ अन्यत्र उसकी व्यावृत्ति प्रदर्शित करते हुए अन्ततः लिङ् से उसका योग सिद्ध किया गया है।

१. नञ् ॥ पा० २।२।६ ॥,
२. न–लोपो नञः ॥ पा० ६।३।७ ॥,
३. तस्मान्नुडचि ॥ पा० ६।३।७४ ॥,

"न कलञ्जं भक्षयेत्" वाक्य पर सामान्य दृष्टि डालने पर ऐसा प्रतीत होता है जैसे 'न' का योग 'कलञ्ज' से हो, किन्तु निषेध में मुख्यतः निवर्तना अपेक्षित होने से उसमें सहयोग करने में अक्षम 'कलञ्ज' संज्ञापद से उसका सम्बन्ध न हो सकेगा। अब रह गयी 'भक्षयेत्' क्रिया। इसके भी कई अंश हैं—प्रथमतः भक्ष् धातु और द्वितीयतः तिङ् प्रत्यय। इन्हीं में से किसी से नञ् का योग होना चाहिये। न+भक्ष् (धातु)+तिङ् (प्रत्यय)। इस स्थिति में 'न' तथा 'भक्ष्' दोनों परस्पर बहुत समीप हैं और उनमें कोई व्यवधान नहीं है। दोनों में निकटता की प्रतीति हो रही है, किन्तु सम्बन्ध सम्भव न हो सकेगा। कारण यह है कि भक्ष् धातु लिङ् प्रत्यय का उपसर्जन, उपपद अथवा विशेषण-सा होने से गौण है। मीमांसादर्शन के अनुसार क्रियापद में प्रधानता प्रत्ययार्थ की होती है, धात्वर्थ गौण होता है, अतः 'न' का योग प्रत्ययार्थ से ही होना चाहिये। इसका कारण यह है कि गौणरूप में उपस्थित पद या पदार्थ अपने से भिन्न प्रकार के पद या पदार्थ से अन्वित नहीं हो सकता है। उदाहरण के लिये 'राजपुरुषं आनय' वाक्य को लिया गया है। 'राजपुरुषं' में 'राजा' पद पुरुष का उपसर्जन है, अतः गौण है। आनयन क्रिया पुरुष के साथ होती है, राजा के साथ नहीं। यदि गौणभूत 'राजा' पद का भी 'आनय' से अन्वय किया गया तो पुरुष के साथ ही राजा को भी आना पड़ेगा, किन्तु व्यवहार में ऐसा होता नहीं है। लाया जाता है पुरुष को न कि राजा को, क्योंकि वह पुरुष का उपसर्जन है, अतः अन्यत्र अर्थात् आनयन आदि क्रियाओं से उसका अन्वय नहीं हो सकता। ठीक इसी प्रकार भक्ष् धातु 'तिङ्' प्रत्यय का उपसर्जन होने से 'न' आदि से अन्वित नहीं हो सकती।

भावनानिरूपण के प्रसङ्ग में स्पष्ट किया गया है कि प्रत्यय के भी दो अंश होते हैं—आख्यात और लिङ्। इनमें से आख्यात अंश से आर्थीभावना-अर्थात् 'सम्पादन' का अर्थ व्यक्त होता है और लिङ् अंश से 'चाहिये' अर्थात् 'प्रवर्तना' का। इन दोनों में भी 'प्रवर्तना' प्रधान है और आर्थीभावना गौण या उपसर्जन। अतः सर्वप्रधान लिङ् से 'नञ्' का अन्वय होगा।




## नञ्स्वभावकथनम्

**(५८) नञश्चैव स्वभावो यत्स्वसमभिव्याहृतपदार्थविरोधिबोधकत्वम्। यथा 'घटो नास्ती'त्यादौ अस्तीतिशब्दसमभिव्याहृतो नञ् घटसत्त्वविरोधि घटासत्त्वं गमयति, तदिह लिङ्समभिव्याहृतो नञ् लिङर्थप्रवर्तनाविरोधिनीं निवर्तनामेव बोधयति। विधिवाक्यश्रवणेऽयं मां प्रवर्तयतीति प्रतीतिः। तस्मान्निषेधवाक्यस्थले निवर्तनैव वाक्यार्थः।**

नञ् का यह स्वरूप है कि वह अपने साथ अन्वित पद के अर्थ के विरोधी का बोध कराता है। जैसे—'घटो नास्ति' आदि में 'अस्ति' इस पद के साथ में पठित नञ् घट की सत्ता की विरोधिनी घट की असत्ता का ज्ञान कराता है। इसी प्रकार यहाँ (न कलञ्जं भक्षयेत्) में लिङ् के साथ अन्वित नञ् लिङ् की अर्थभूता प्रवर्तना की विरोधिनी निवर्तना

का ही बोध कराता हैं। ('यजेत स्वर्गकामः' आदि) विधिवाक्य का श्रवण होने पर 'यह विधि मुझे (यागादि में) प्रवृत्त करती है' इस वाक्यार्थ की प्रतीति होती है, अतः निषेध वाक्यों के स्थानों में निवर्तना ही वाक्यार्थ होती है।

**एवं शब्दभावनारूपस्य प्रत्ययार्थस्य प्रवर्तनाविशेषस्य नञर्थेनान्वये सिद्धे नञः प्रत्यार्थभूतप्रवर्तनाविरोधिनिवर्तनाबोधकत्वप्रदर्शनाय प्रथमं तत्स्वभावं प्रदर्शयति—नञश्चैष** स्वभाव इति। **अत्र स्वसमभिव्याहृतपदार्थविरोधिबोधकत्वं स्वान्वितपदार्थविरोधिबोधकत्वं बोध्यम्। तेन कलञ्जादिपदार्थानामपि विरोधिबोधकत्वं नञो दुर्वारं स्यात्तेषामप्येकत्र सहपाठरूपनञ्समभिव्याहारस्य सत्त्वादिति निरस्तम्। तेषां नञन्वितपदार्थत्वाभावस्य दर्शितत्वेन नञस्तद्विरोधिबोधकत्वासंभवात्। नञः स्वसमभिव्याहृतपदार्थविरोधिबोधकत्वं दृष्टान्तेन स्पष्टयति—यथेत्यादिना।** घटसत्त्वविरोधीति। **नास्तीत्युक्ते कस्यासत्त्वमस्तीति-सत्त्वशब्दान्वयिना नञात्र बोध्यते इति सत्त्वनिरूपकाकाङ्क्षायाः सत्त्वाद् घटनिरूपितसत्त्व-विरोधीत्यर्थः। इदानीं नञः स्वभावप्रदर्शनस्य फलं दर्शयति**—तदिति। **तन्नञित्यन्वयः। तत्प्रदर्शितस्वभावं नञित्यर्थः।** इहेति। **'न कलञ्जं भक्षयेद्, ब्राह्मणो न हन्तव्य' इत्यादौ वाक्य इत्यर्थः। ननु लिङः प्रवर्तनाप्रतिपादकत्वे सिद्धे तत्संबद्धनञस्तदर्थप्रवर्तनाविरोधि-निवर्तनाप्रतिपादकत्वं सेत्स्यति तदेव कुत इत्याशङ्क्य तत्र हेतुमाह—विधीति।** प्रतीतेरिति। **प्रवर्तनाप्रतीतेरित्यर्थः। यद्वा 'यजेत स्वर्गकाम' इति विधिवाक्यश्रवणेऽयं मां प्रवर्तयतीति प्रवर्तनाप्रतीतिवत्, 'न कलञ्जं भक्षये'दित्यादिनिषेधवाक्यश्रवणेऽप्ययं मां निवर्तयतीति निवर्तनाप्रतीतेरित्यध्याहारेण विधीत्यादिहेतुवाक्यं दृष्टान्तदार्ष्टान्तिकविधया योजनीयम्। एवं सिद्धं निवर्तनारूपं निषेधवाक्यार्थमुपसंहरति—**तस्मादिति। **'न कलञ्जं भक्षये'दित्यत्र कलञ्जकर्मकभक्षणानुकूलपुरुषप्रवृत्तिजनकप्रवर्तनां प्रति लिङर्थप्रवर्तना-विरोधिनिवर्तनैव वाक्यार्थः। एवमन्यत्रापि निषेधवाक्येषु सर्वत्र निवर्तनाया एव वाक्यार्थत्वे विधिनिषेधयोर्भिन्नार्थत्वमप्युपपन्नं भवति, हननादिवर्जनकर्तव्यतावाक्यार्थत्वपक्षे तु कर्तव्य-ताया एवोभयत्र प्रतिपाद्यत्वात्तयोरेकार्थत्वं स्यात्तच्च न युक्तम्। यथाहुः—अन्तरं यादृशं लोके ब्रह्महत्याश्वमेधयोः। दृश्यते तादृगेवेह विधानप्रतिषेधयो'रिति। तस्मान्निवर्तनैव प्रतिषेधेषु वाक्यार्थ इति सिद्धम्।**

यहाँ नञ् का स्वरूप बतलाया गया है कि वह जिस पद के साथ उक्त होता है अर्थात् अन्वित होता है, उस पद के अर्थ के विरोधी का ज्ञापक होता है। उदाहरण 'घटो नास्ति' का दिया गया है। यदि 'न' का अन्वय घट के साथ होता—'न घटः = अघटः अस्ति' तो वह घट के विरोधी पट या दण्ड आदि के अस्तित्व का ज्ञापक होता। यहाँ ध्यान रखना चाहिये कि 'विरोधी' 'अभाव' का वाचक नहीं है। अभाव सामान्य भाषा में अस्तित्व हीनता का वाचक है जब कि 'विरोधी' पद मात्र स्वरूपभिन्नता का। शेष स्पष्ट है।

**(५९) यदा तु प्रत्ययार्थस्य तत्रान्वये बाधकं तदा धात्वर्थस्यैव तत्रान्वयः। तच्च बाधकं द्विविधम्–तस्य व्रतमित्युपक्रमो विकल्पप्रसक्तिश्च।**

बाधकं द्विविधम्

**तत्राद्यं 'नेक्षेतोद्यन्तमादित्य'मित्यादौ 'तस्य व्रत' मित्युपक्रम्यैतद्वाक्यपाठात्। तथा चात्र पर्युदासाश्रयणम्।**

**तथा हि—व्रतशब्दस्य कर्तव्यार्थे रूढत्वात्तस्य व्रतमित्यत्र स्नातकस्य व्रतानां कर्तव्यत्वेनोपक्रमात् । किं तत्कर्तव्यमित्याकाङ्क्षायां 'नेक्षेतोद्यन्तमि'त्यादिना कर्तव्यार्थ एव प्रतिपादनीयः, अन्यथा पूर्वोत्तरवाक्ययोरेकवाक्यत्वं न स्यात् ।**

**तथा च नञर्थेन न प्रत्ययार्थान्वयः कर्तव्यार्थानवबोधात् । विध्यर्थप्रवर्तना-विरोधिनिवर्तनाया एव तादृशनञा बोधनात्, तस्याश्च कर्तव्यार्थत्वाभावात् । तस्मान्नेक्षेतेत्यत्र नञा धात्वर्थविरोध्यनीक्षणसंकल्प एव लक्षणया प्रतिपाद्यते तस्य कर्तव्यत्वसंभवात् ।**

**आदित्यविषयकानीक्षणसंकल्पेन भावयेदिति वाक्यार्थः । तत्र भाव्या-काङ्क्षायाम् 'एतावता हैनसा वियुक्तो भवती'ति वाक्यशेषावगतः पापक्षयो भाव्यतयान्वेति । एवं च पूर्वोत्तरयोरेकवाक्यत्वं निर्वहत्येव । न चात्र धात्वर्थ-विरोधिनः पदार्थान्तरस्यापि संभवात्कथमनीक्षणसंकल्पस्यैव भावनान्वय इति वाच्यम् । तस्य कर्तव्यताऽभावेन प्रकृते भावनान्वयायोग्यत्वात् ।**

जब प्रत्ययार्थ का उससे ( नञर्थ से ) अन्वय में बाधक होता है, तब धात्वर्थ का ही नञर्थ से अन्वय होता है ।

और वह बाधक दो प्रकार का है—'तस्य व्रतम्' यह प्रकरण तथा विकल्प-प्रसक्ति । उनमें प्रथम—'नेक्षेतोद्यन्तमादित्यम्'—निकल रहे तथा डूब रहे सूर्य को कभी न देखे—आदि में है, क्योंकि वहाँ 'तस्य व्रतम्'—ये ब्रह्मचारी के अनुष्ठेय कर्म हैं—ऐसा प्रकरण प्रारम्भ करके तब इस वाक्य ( नेक्षेत० आदि ) का पाठ किया गया है । इसलिये वहाँ पर्युदास का अवलम्बन लिया जाता है ।

जैसे कि व्रतशब्द के कर्त्तव्य-अर्थ में रूढ़ होने से 'तस्य व्रतम्' इस वाक्य में स्नातक के व्रतों का कर्त्तव्य के रूप में उपक्रम होने के कारण—वह कर्त्तव्य क्या है' यह आकांक्षा होने पर 'नेक्षेतोद्यन्तम्' इत्यादि वाक्य के द्वारा कर्त्तव्यरूप अर्थ का ही प्रतिपादन होना चाहिये, नहीं तो पहले एवं बाद के वाक्यों में—( 'तस्य व्रतम्' और 'नेक्षेत०' में ) एकवाक्यता नहीं होगी ।

ऐसी स्थिति में नञर्थ के साथ प्रत्ययार्थ का अन्वय नहीं होगा क्योंकि ऐसा होने पर 'कर्त्तव्यरूप अर्थ का बोध नहीं हो सकेगा । विधि की अर्थभूता प्रवर्तना की विरोधिनी निवर्तना ही उस प्रकार के ( प्रत्ययार्थ से अन्वित ) नञ् से बोधित होगी, और इस निवर्तना में कर्त्तव्यरूप अर्थ का अभाव होगा । अतः 'नेक्षेत०' इस वाक्य में नञ् से ( ईक्षणरूप ) धातु के अर्थ का विरोधी अनीक्षणसङ्कल्प ही लक्षणा से प्रतिपादित किया जाता है, क्योंकि उसकी कर्त्तव्यता संभव है ।

( अतः नेक्षेत०' आदि ) वाक्य का अर्थ हुआ—'आदित्यविषयक अनीक्षण के सङ्कल्प से भावना करे ।' इस अर्थ में 'भाव्य' ( अर्थात् किसकी भावना करे ) की आकांक्षा होने पर 'एतावता हैनसा वियुक्तो भवति'—इससे वह निश्चित ही पाप से मुक्त हो जाता है—वाक्य के इस शेषांश से ज्ञात पापक्षय भाव्य के रूप में अन्वित होता है । इस प्रकार पहले तथा बाद के वाक्यों में एकवाक्यता का भी निर्वाह हो जाता है । ( ईक्षण ) धातु के अर्थ के विरोधी दूसरे पदार्थ की भी संभावना हो सकने से अनीक्षणसङ्कल्प का ही भावना से अन्वय कैसे हो गया, यह यहाँ नहीं कहना चाहिये क्योंकि उस ( पदार्थान्तर ) की करणीय कर्म के रूप में प्राप्ति न होने से प्रस्तुत प्रसङ्ग में वह भावना के साथ अन्वय के योग्य नहीं है ।

यदि तु प्रत्ययार्थस्य नञर्थेनान्वये किंचिद्बाधकं वर्तते तदा धात्वर्थस्यैव नञर्थेनान्वयो भवतीत्याह—यदा त्वित्यादिना । तत्र बाधकं विभजते—तच्चेति । प्रत्ययार्थस्य नञर्थेनान्वये वर्तमानं चेत्यर्थः ।

तत्राद्यमिति । तयोरुक्तयोर्द्वयोर्मध्य आद्यबाधकमित्यर्थः । तस्य व्रतमितीति । तस्य स्नातकस्य ब्रह्मचारिविशेषस्य व्रतं प्रजापतिदेवताकमादित्यानीक्षणसंकल्पादिकं किंचिदनुष्ठेयमित्यर्थः । एतद्वाक्यपाठादिति । 'नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदाचने'त्येतद्वाक्यपाठादित्यर्थः । तथा चेति । तस्य व्रतमिति स्नातकस्यानुष्ठेयमुपक्रम्य 'नेक्षेतोद्यन्त'मित्यादिवाक्यपाठे चास्मिन्वाक्ये पर्युदास एव समाश्रीयत इत्यर्थः । किंच 'नेक्षेतोद्यन्तमादित्य'मित्यत्र नञ्पदमभिधावृत्त्या प्रतिषेधं ब्रूते नतु पर्युदासं, लक्षणापत्तेः प्रतिषेधस्य च प्राप्तिपूर्वकत्वाद्वैदिकस्य प्रतिषेधस्य वैदिक्येव प्राप्तिस्तु प्रत्यासन्नाभवेत् । तथा च सति यत्र क्रतावादित्येक्षणं विहितं तत्रायं प्रतिषेध उदयास्तमयोद्देशेन प्रवर्तते । एवं च सति नात्र फलं कल्पनीयं स्यात् । पर्युदासमाश्रित्य पुरुषार्थत्वाङ्गीकारे त्वधिकारसिद्धये फलस्य कल्पनीयत्वमापद्येत, तस्मादत्र क्रत्वर्थः प्रतिषेध इत्याशङ्क्य, तस्य व्रतमित्युपक्रम्य 'नेक्षेतोद्यन्तमि'त्याद्याम्नातत्वाद् व्रतशब्दस्य च कर्तव्यरूपार्थे रूढत्वादत्र किंचिदनुष्ठेयमेव प्रतिभाति । तच्च पर्युदासाश्रयणे सत्येवोपपद्यते ।

किंचोपक्रमवाक्ये प्रतिज्ञातस्यैवार्थस्यात्रापि वक्तव्यत्वात्, उपक्रमवाक्ये तु स्नातकानुष्ठेयव्रतानामेव प्रतिज्ञातत्वात् कानि तानि व्रतानीत्यपेक्षायां स्नातकव्रतप्रदर्शनायास्य वाक्यस्यावतारादत्र कर्तव्य एव कश्चिदर्थो वक्तव्यः, स च पर्युदासपक्षे लभ्यते, निषेधपक्षे तु दुर्लभ एवेत्यभिप्रायेण पर्युदासपक्षमुपपादयति—तथा हीत्यादिना । नेक्षेतोद्यन्तमित्यादौ कर्तव्यरूपस्यार्थस्याप्रतिपादनीयत्वे बाधकमाह—अन्यथेति । पूर्वोत्तरेति । तस्य व्रतमिति नेक्षेतोद्यन्तमित्याद्युत्तरवाक्यं च तयोरेकवाक्यत्वं बाध्येतेत्यर्थः ।

ननु 'नेक्षेतोद्यन्त'मित्यादौ भवतु कर्तव्यरूपार्थस्यैव प्रतिपादनं, ततोऽपि किं स्यादित्यत आह—तथा चेति । तथा च 'नेक्षेतोद्यन्त'मित्यादौ कर्तव्यरूपार्थस्य प्रतिपादनीयत्वे च नञर्थेन प्रत्ययार्थान्वयावकाशो न भवतीत्यर्थः । ननु 'नेक्षेतोद्यन्तमादित्य'मित्यत्र नञर्थेन प्रत्ययार्थस्यान्वये को दोष इत्याशङ्क्य तत्र हेतुमाह—कर्तव्येति । नञर्थेन प्रत्ययार्थस्य तत्रान्वये ततः कर्तव्यार्थानवबोधापत्तेरित्यर्थः । ननु प्रत्ययान्वितस्य नञः कर्तव्यार्थावबोधकत्वानङ्गीकारे को वार्थस्तेनावबोध्यत इत्यत आह—विध्यर्थेति । तादृशनञेति । प्रत्ययान्वितेन नञेत्यर्थः । तादृशनिवर्तनैव कर्तव्यरूपार्थो भवतु को दोष इति मन्दाभिप्रायमाशङ्क्याह—तस्याश्चेति । निरुक्तनिवर्तनायाश्चेत्यर्थः । किं चैवं नञः प्रत्ययेनान्वयासंभवे प्रत्ययादवतारितो नञ् धातुना सह संबध्यते, धातुना नञः संबन्धे च न तस्य निषेधकत्वं संभवति विधायकसंबद्धस्यैव नञो निषेधकत्वात्, निषेधकत्वप्रतिपक्षत्वात्, नामधातुभ्यां योगे तु नञो न निषेधकत्वं युक्तं तयोरविधायकत्वात् । यथाहुः—'नामधात्वर्थयोगे तु नैव नञ् प्रतिषेधकः । वदतोऽब्राह्मणाधर्मावन्यमात्रविरोधिना'विति । तस्मान्नेक्षेतेत्यत्र नञो धातुना योगान्नञा धात्वर्थक्षणविरोधी कश्चनार्थः प्रतिपाद्यते । यद्यपि

नञोऽभाव एव शक्तिः । तथा चेक्षणस्याभाव एव नञः शक्यार्थो लाघवात् नतु तद्विरोधी तस्यां भावघटितत्वेन गौरवापत्तेः । तदन्यतद्विरुद्धतदभावेषु नञिति स्मरणं तु प्रतीत्यभिप्रायं न शक्त्यभिप्रायं, तथापि नेक्षेतेत्यत्र प्रत्ययस्य नञा संबन्धशून्येन च तेन तावत्कश्चिदर्थो विधेयः स्वीकर्तव्यः । तत्र न तावद्धात्वर्थो विधातुं, नञा तदभावबोधनात् । नापि तदभावो विधातुं शक्यते, अभावस्याविधेयत्वात्, तस्मात्पर्युदासाश्रयणेन धात्वर्थेक्षणविरोधी कश्चनात्र विधानयोग्योऽर्थो नञा लक्षणया प्रतिपाद्यते, सच विधानयोग्यः पदार्थोऽनीक्षणसंकल्प एव, तस्येक्षणविरोधित्वात्कर्तव्यत्वसंभवाच्च. ततश्च स एव संकल्पोऽत्रानुष्ठेयत्वेन विधीयत इत्यभिप्रायेण पर्युदासस्यावश्यकत्वात् प्रत्ययादवतारितस्य नञो धातुसंबन्धेन तदर्थविरोध्यनीक्षणसंकल्पप्रतिपादकत्वमुपसंहरति—तस्मादिति । लक्षणयेति । स्वसमभिव्याहृतपदार्थाभाव एव नञः स्वशक्यार्थो भवति । तथा च स्वसंबध्यमानधात्वर्थाभावं शक्त्या प्रतिपादयन् नञ् तदभावसंबन्धिनं तदर्थविरोधिनं लक्षणया प्रतिपादयत्येव तदभावतद्विरोधिनोः संबन्धस्य संभवात् । दृश्यते हि तेजोऽभावतमसोः संबन्धः । तथा चोद्यन्तमस्तं यन्तं चादित्यं नेक्षिष्य इत्येवंरूपः संकल्पोऽत्रानुष्ठेयत्वेन विधीयमानो नञा लक्षणया प्रतिपाद्यत इति भावः । तस्यति । अनीक्षणसंकल्पस्येत्यर्थः ।

पर्युदासपक्षे 'नेक्षेतोद्यन्तमादित्य'मित्यस्य वाक्यस्यार्थं प्रदर्शयति—आदित्येति । यत्तु पर्युदासपक्षे फलस्यात्र कल्पनीयत्वमापादितं तदपि न, वाक्य-शेषावगतस्य पापक्षयस्यैवात्र फलत्वसंभवादित्याशयेनात्र भाव्यान्वयं प्रदर्शयति—तत्रेति । अनीक्षणसंकल्पभावनायामित्यर्थः । एनसा वियुक्तो भवतीति । पापेन विरहितो भवतीत्यर्थः । किंच 'नेक्षेतोद्यन्तमादित्य'मित्यत्रानीक्षणसंकल्परूपस्यानुष्ठेयस्य प्रतिपादने तस्य व्रतमिति स्नातकव्रतोपक्रमवाक्यस्य नेक्षेतेत्याद्युत्तरवाक्येनैकवाक्यत्वमुपपन्नं भवति, पूर्वप्रतिज्ञातस्यैवोत्तरप्रतिपादनादित्याह—एवमिति । ननु धात्वर्थेक्षणविरोधिनो बहवः पदार्था अनुष्ठेयाः सन्ति, ततश्च कथमत्र वाक्येऽनीक्षणसंकल्पस्यैव भावनायां करणत्वेनान्वयः स्वीक्रियत इत्याशङ्क्य परिहरति—न चेत्यादिना । यद्यपि पदार्थान्तराणां पटेन चक्षुषोः पिधानादिरूपाणां धात्वर्थेक्षणविरोधित्वं संभवति, तथापि कायिकवाचिकव्यापाराविशेषाणामत्राप्रतीयमानत्वान्मानसव्यापारस्य चाप्रतिषेधात्संकल्प एव मानसव्यापारविशेषोऽत्र परिशिष्यत इत्यभिप्रेत्य तत्र हेतुमाह—तस्येति । पटादिना चक्षुषोः पिधानादिरूपस्य पदार्थान्तरस्य कर्तव्यताभावेन कर्तव्यत्वेन विवक्षाऽसंभवेन सर्वक्रियाऽविनाभूतस्यैव धात्वर्थेक्षणविरोधिपदार्थान्तरस्य नेक्षेतेत्यादौ प्रकृते भावनान्वययोग्यत्वमुपपद्यते । तथा च धात्वर्थेक्षणविरोध्यनीक्षणसंकल्पस्यैवात्र भावनान्वययोग्यता संभवति, तस्य सर्वक्रियाऽविनाभूतत्वान्न तु तादृशपदार्थान्तरस्य तस्य सर्वक्रियाऽविनाभूतत्वासंभवादिति भावः ।

निवर्तना अर्थ का ज्ञान कराने के लिये नञर्थ की प्रत्ययार्थ से अन्वय की अपेक्षा प्रतिपादित की गयी है । यहाँ यह बतलाया जा रहा है कि कुछ ऐसे भी स्थल हैं जहाँ प्रत्ययार्थ से नञर्थ के अन्वय में बाधा पड़ती है, अर्थात् यदि इन्हीं दोनों का अन्वय स्वीकार किया गया हो सभी वाक्यों की एकवाक्यता नहीं बन सकेगी । एक प्रसङ्ग के अनेक वाक्यों में एकतात्पर्यता न रहने पर वाक्य अनर्थक होने लगेंगे । अतः अर्थसङ्गति के लिये कुछ स्थलों पर नञर्थ का अन्वय प्रत्ययार्थ से न करके धात्वर्थ से किया जाता है ।

इस प्रकार के दो स्थल हैं जहाँ उक्त सम्बन्ध में बाधा पड़ती है। इनमें से एक है वह प्रसङ्ग जहाँ स्नातकों द्वारा अवश्य करणीय व्रतों का उल्लेख है। व्रत वह मानस व्यापार है जिसको सम्पन्न करना ही अपेक्षित है। स्नातक के कर्त्तव्य कर्मों के प्रकरण का प्रारम्भ 'तस्य व्रतम्' कह कर किया गया। इसका अभिप्राय यह हुआ कि यहाँ से जिन कर्मों का परिगणन कराया जा रहा है, उनका सम्पादन स्नातक को करना ही है। इसके आगे केवल विध्यात्मक वाक्य होते जैसे—पयः पिबेत्, स्वशाखां पठेत् आदि, तब तो कोई कठिनाई न होती, क्योंकि यहाँ पानकर्म और पठनकर्म का सम्पादन अपेक्षित हैं। इसकी संगति व्रत की करणीयता से बैठ रही है। किन्तु दुःख इस बात का है कि आगे का विधान है—नेक्षेदुद्यन्तम् आदित्यम्' आदि। यदि वाक्य 'ईक्षेत उद्यन्तम् आदित्यम्' होता, तब व्रत के अनुसार ईक्षण कर्म का सम्पादन किया जाता, किन्तु 'ईक्षण न करना' में सम्पादन के लिये कुछ नहीं रह जाता है, जब कि 'व्रतम्' पद इस बात पर जोर देता है कि कर्म का सम्पादन अपेक्षित है। यह विरोध इसलिये उत्पन्न हो रहा है क्योंकि 'नेक्षेत' के नञ् का अन्वय प्रत्यय के लिङर्थ से किया जा रहा है, अतः प्रवर्तना की विरोधिनी निवर्तना व्यक्त हो रही है जिसमें किसी कर्म का सम्पादन अपेक्षित नहीं है। जब तक प्रवर्तना नहीं होगी तब तक 'व्रतम्' से निर्दिष्ट कर्म की निष्पत्ति संभव नहीं होगी।

इसी विरोध को बचाकर अर्थसंगति के लिये नञर्थ का अन्वय लिङर्थ से न करके धात्वर्थ के साथ किया जा रहा है। अर्थात् नञ् लगने का रूप-ईक्ष् धातु+त प्रत्यय (=आख्यात+'न+लिङ्')—न होकर ऐसा होगा—(न+ईक्ष्)+त प्रत्यय (=आख्यात+लिङ्)। नञ् जिससे अन्वित होता है उसके विरोधी अर्थ का बोध कराता है, अतः यहाँ ईक्ष् धातु के अर्थ ईक्षण के साथ लगकर नञ् उसके विरोधी का बोधक होगा। अब प्रश्न उठता है कि ईक्षण का विरोधी क्या है? उत्तर है—अनीक्षणसंकल्प। पुनः प्रश्न है कि ईक्षण का विपरीत अनीक्षण होता है, 'संकल्प' कहाँ से जुड़ गया? उसका उत्तर यह है कि ईक्षण का विरोधी अनीक्षण अभिधाशक्ति से होता है, किन्तु यहाँ लक्षणाशक्ति का प्रयोग किया गया है उसी से यह संकल्पयुक्त अर्थ निकला। यदि ईक्षण का विरोधी अनीक्षण अर्थ ही लिया जाता तो फिर पहले की ही असंगति उपस्थित होती, क्योंकि 'अनीक्षण' में कुछ भी सम्पन्न करना नहीं होता है। अनीक्षणसंकल्प एक मानस व्यापार है जिसको सम्पन्न किया जा सकता है। जहाँ मुख्यार्थ का बाध होता है अर्थात् वाच्य अर्थ की अन्विति नहीं हो पाती है, तब सङ्गति के लिये उससे सम्बद्ध अर्थ का ग्रहण कर लिया जाता है। यहाँ ईक्षण का विरोधी अनीक्षण अर्थ सम्पाद्य नहीं है, अर्थात् मुख्यार्थ का बाध हो रहा है, अतः लक्षणा से उसका निष्पादन के योग्य 'अनीक्षणसङ्कल्प' अर्थ लिया गया। मूल ग्रन्थ के 'तस्मान्नेक्षेत···कर्तव्यत्वसंभवात्' का यही आशय है।

इस प्रकार 'नेक्षेतोद्यन्तम्' आदि वाक्य का मीमांसा शास्त्रानुसार अर्थ हुआ—'आदित्यविषयक अनीक्षणसङ्कल्प से भावना करे'। 'किसकी भावना करे' इस प्रकार साध्य की अपेक्षा होने पर 'एतावता हैनसा वियुक्तो भवति' इस शेष वाक्य से ज्ञात हो जाता है कि 'पापक्षय' की भावना करे, अर्थात् यदि स्नातक ने निर्दिष्ट व्रतों का पालन किया है, तो वह पापमुक्त हो जायेगा, उसके पापों का क्षय हो जायेगा। अतः पापक्षय के लिये स्नातक को ये व्रत करने चाहिये। इस प्रकार नञर्थ का लिङर्थ से अन्वय न करके धात्वर्थ से करने पर-ईक्षण के विरोधी अनीक्षणसङ्कल्प अर्थ का ग्रहण करने पर—'तस्य व्रतम्' 'नेक्षेत०' तथा "एतावता हैनसा०" आदि सभी में एकवाक्यता हो जाती हैं, अर्थात् सब से एक तात्पर्य का प्रतिपादन हो जाता है, कोई असङ्गति नहीं होती।

यदि कहा जाये कि ईक्षणरूप धात्वर्थ का विरोधी अनीक्षणसङ्कल्प को ही क्यों माना गया जब कि 'वस्त्र से नयन ढँकना' आदि—नयनपिधान-भी उसका ऐसा विरोधी अर्थ है जिसका सम्पादन संभव है, तो उत्तर है कि दर्शन-विरोधी होने पर भी यह लिङर्थभूता प्रवर्तना अर्थात् शाब्दी भावना का विषय नहीं बन सकता। भावना का विषय वही बन सकता है जिसका विधान किसी

स्वतन्त्र विधिवाक्य से हो रहा हो। नयनपिधान यहाँ किसी विधिवाक्य द्वारा कर्त्तव्यत्वेन विहित नहीं है। अतः इसमें भावना से अन्वित होने की योग्यता नहीं है।[1] इसके अतिरिक्त रामेश्वर शिवयोगी ने अनीक्षणसङ्कल्प को व्रत की भांति मानस व्यापार मानकर दोनों की अन्विति को उचित माना है, और कपड़े से नयनपिधान को शारीरिक कार्य मानकर उसको अन्वय के अयोग्य कहा है। यहाँ ग्रन्थ में उद्धृत 'तस्य व्रतम्' 'नेक्षेतोद्यन्तम्'० तथा 'एतावता हैनसा०'' ये तीनों वाक्य वैदिकभाषा की शैली में हैं, किन्तु पता नहीं कौन से सूत्र या ब्राह्मणग्रन्थ में इनका एक साथ प्रयोग हुआ है। ये वचन ही क्रमशः इनके स्रोत रहे हों—

अतोऽन्यतमया वृत्त्या जीवंस्तु स्नातको द्विजः।
स्वर्गायुष्ययशस्यानि व्रतानीमानि धारयेत्॥
नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदाचन।
नोपसृष्टं न वारिस्थं न मध्यं नभसो गतम्॥
अनेन विप्रो वृत्तेन वर्तयन् वेदशास्त्रवित्।
व्यपेतकल्मषो नित्यं ब्रह्मलोके महीयते॥ मनुस्मृति ४।१३,३७,२३०

**( ६० ) द्वितीयं 'यजतिषु ये यजामहं करोति नानुयाजेष्वि'त्यादौ। अत्र विकल्पप्रसक्तौ च पर्युदासाश्रयणात्।**

**तथा हि—यद्यत्र वाक्ये नञर्थे प्रत्ययार्थान्वयः स्यात्तदा अनुयाजेषु 'ये यजामहं' इति मन्त्रस्य प्रतिषेधः स्यात्, अनुयाजेषु ये यजामहं न कुर्यादिति। स च प्राप्तिपूर्वक एव, प्राप्तस्यैव प्रतिषेधात्। प्राप्तिश्च 'यजतिषु ये यजामहं करोती'ति शास्त्रादेव वाच्या। शास्त्रप्राप्तस्य च प्रतिषेधे विकल्प एव, न तु बाधः। प्राप्तिमूलरागस्येव तन्मूलशास्त्रस्य शास्त्रान्तरेण बाधायोगात्।**

**न च 'पदे जुहोती'तिविशेषशास्त्रेण 'आहवनीये जुहोती'ति शास्त्रस्येव 'नानुयाजेष्वि'त्यनेन 'यजतिषु येयजामहं करोती'त्यस्य बाधः स्यादिति वाच्यम्। परस्परनिरपेक्षयोरेव शास्त्रयोर्बाध्यबाधकभावात्। पदशास्त्रस्य हि स्वार्थविधानार्थमाहवनीयशास्त्रानपेक्षणान्निरपेक्षत्वम्। प्रकृते तु निषेधशास्त्रस्य निषेध्यप्रसक्त्यर्थं 'यजतिषु येयजामह'मित्यस्यापेक्षणान्न निरपेक्षत्वम्।**

**तस्माच्छास्त्रविहितस्य शास्त्रान्तरेण प्रतिषेधे विकल्प एव। स च न युक्तः। विकल्पे शास्त्रस्य पाक्षिकाप्रामाण्यापातात्। न ह्यनुयाजेषु येयजामहमित्यस्यानुष्ठाने नानुयाजेष्वित्यस्य प्रामाण्यं संभवति, व्रीहियागानुष्ठाने यवशास्त्रस्येव। द्विरदृष्टकल्पना च स्यात्, विधिप्रतिषेधयोरपि पुरुषार्थत्वात्, अतो नात्र प्रतिषेधस्याश्रयणम्, किंतु नञोऽनुयाजसंबन्धमाश्रित्य पर्युदासस्यैव।**

( नञर्थ का प्रत्ययार्थ के साथ अन्वय का ) द्वितीय बाध 'यजतिषु 'ये यजामहं' करोति

१. तस्य पदार्थान्तरस्य कर्त्तव्यत्वाभावेन कर्त्तव्यतया अनुदिष्टत्वेन। तथा च ईक्षणविरोधि-व्यापारान्तराणां प्राप्तावपि तेषां सर्वेषाम् अनुष्ठानस्य अशक्यतया तद्विशेषस्यानुष्ठेयत्वमेव वाच्यम्। तद्विशेषानुष्ठानं च प्रमाणान्तरसापेक्षतया प्रकृते प्रमाणान्तराभावादशक्यमतो व्यापारान्तरस्य न भावनान्वययोग्यत्वम्। प्रतिपादिका पृ० १४०.

नानुयाजेषु' इत्यादि वाक्यों में दर्शनीय है। यहाँ विकल्प-प्रसक्ति होने पर, ( निर्दिष्ट अर्थ ) पर्युदास का आश्रय लेने से ही प्रकट होता है।

जैसे कि-यदि इस वाक्य ( यजतिषु० आदि ) में नञर्थ से प्रत्ययार्थ का अन्वय किया जायेगा तो अनुयाजों में 'ये यजामहे' मन्त्र का बाध होने लगेगा-जिसका अर्थ होगा-'अनुयाजों में 'ये यजामहे' मन्त्र का उच्चारण न करना चहिये। यह निषेध प्राप्तिपूर्वक ही है, क्योंकि बाध प्राप्त का ही होता है। यह प्राप्ति 'यजतिषु ये यजामहं करोति' इस शास्त्रवाक्य से ही कहनी चाहिये। शास्त्रवाक्य से प्राप्त विषय का प्रतिषेध होने पर विकल्प ही माना जाता है न कि बाध। प्राप्ति के आश्रयभूत शास्त्र का दूसरे शास्त्रवचन से उस प्रकार बाध नहीं होता है जैसा कि प्राप्ति के आश्रयभूत राग का ( शास्त्रवाक्य से हो जाता है। )

'पदे जुहोति' इस विशेष शास्त्रवाक्य से 'आहवनीये जुहोति' इस शास्त्र का जिस प्रकार बाध हो जाता हैं, उसी प्रकार 'नानुयाजेषु' इस शास्त्रवाक्य से 'यजतिषु ये यजामहं करोति' इस वाक्य का बाध हो जायेगा, ऐसा नहीं कहा जा सकता, क्योंकि उन्हीं दो शास्त्र-वाक्यों में बाध्यबाधकभाव होता है जो परस्पर सापेक्ष नहीं होते। पदशास्त्र ( 'पदे जुहोति' शास्त्रवाक्य ) को अपने अर्थ के सम्पादन के लिये आहवनीयशास्त्र—( 'आहवनीये जुहोति' इस शास्त्रवाक्य ) की अपेक्षा न होने से, उसमें निरपेक्षता है, किन्तु वर्तमान प्रसङ्ग में—( यजतिषु ये यजामहं० आदि में ) निषेधवाक्य—( नानुयाजेषु ) को निषेध्य—'ये यजामहं'—की प्राप्ति के लिये 'यजतिषु ये यजामहं करोति' इस वाक्य की अपेक्षा है, अतः ( निषेधशास्त्र ) निरपेक्ष नहीं है।

अतः शास्त्र से विहित पदार्थ का दूसरे शास्त्रवाक्य से बाध होने पर विकल्प ही ग्राह्य होता है। यह विकल्प संगत नहीं है, क्योंकि विकल्प ग्रहण करने पर शास्त्र के एक पक्ष—अर्थात् एकशास्त्रवाक्य—में अप्रामाण्य आ जायेगा, क्योंकि 'अनुयाजेषु ये यजामहं' इसका अनुष्ठान करने पर 'नानुयाजेषु' इस वाक्य का प्रामाण्य नहीं हो सकता, जैसा कि व्रीहि से याग का सम्पादन करने पर यव के विधायक शास्त्र का होता है। ( विकल्प मानने पर ) दो अदृष्टों की भी कल्पना करनी पड़ेगी, क्योंकि विधि और प्रतिषेध दोनों ही पुरुष के लिये इष्ट हैं। अतः यहाँ ( यजतिषु० आदि में ) प्रतिषेध का नहीं, अपितु नञ् का अनुयाज से सम्बन्ध लेकर पर्युदास का ही आश्रय अपेक्षित है।

**प्रत्ययार्थस्य नञर्थेनान्वये विकल्पप्रसक्तिरूपस्य बाधकस्य प्रतिषेधविघटनेन पर्युदास-गमकत्वप्रदर्शनाय तद्विषयमुदाहरति—द्वितीयमिति।**

**अत्र पर्युदासाश्रयणाय विकल्पप्रसक्तिमेवोपपादयति—तथा हीत्यादिना। स चेति निषेधश्चेत्यर्थः। तत्र हेतुमाह—प्राप्तस्यैवेति। शास्त्रादेवेति। ब्राह्मणहननादेरिव रागतः प्राप्त्यसंभवात्तस्य शास्त्रादेव प्राप्तिर्वाच्येत्यर्थः। उपपादितां विकल्पप्रसक्तिमुपसंहरति—शास्त्रप्राप्तस्येति। ननु यथा हननादौ प्रवृत्तं पुरुषं हननादिप्राप्तिमूलभूतरागस्य बाधने ततो न हन्तव्य इत्यादिशास्त्रं निवर्तयति, तथा 'यजतिषु ये यजामहं करोती'ति शास्त्रादनुयाजे-ष्वप्यनुष्ठानकाले यजतित्वाविशेषादेव 'येयजामह' इति मन्त्रस्य समुच्चारणे प्रवृत्तं पुरुषं तत्प्राप्तिमूलभूतस्य प्रदर्शितशास्त्रस्य यजतिसामान्ये 'येयजामह' इति मन्त्रप्रापकस्यानुयाजेषु बाधेन ततो 'नानुयाजेषु ये यजामहं करोती'ति शास्त्रं निवर्तयत्वेति कथं न शास्त्रप्राप्तस्य बाधः स्यादित्यत आह—प्राप्तीति। शास्त्रेण बाध इति शेषः। तन्मूलशास्त्रस्येति। 'ये यजामह' इति मन्त्रप्राप्तिमूलशास्त्रात् 'यजतिषु ये यजामहं करोती'त्येवंरूपाच्छास्त्रा-न्तरेण 'नानुयाजेषु ये यजामहं करोती'त्येवंरूपेण प्रदर्शितमन्त्रप्राप्तिमूलभूतस्य प्रदर्शित-**

शास्त्रस्य बाधायोगादित्यर्थः। दृष्टान्तस्त्वत्र व्यतिरेकी बोध्यः। तथा च—यथा हननादिप्राप्तिमूलरागस्य भ्रान्तिनिमित्तकस्य शास्त्रेण बाधो भवति तथा मन्त्रप्राप्तिमूलशास्त्राच्छास्त्रान्तरेण मन्त्रप्राप्तिमूलशास्त्रस्य बाधो न युक्तो, निषेधशास्त्रस्य निषेध्यप्राप्तिसापेक्षत्वेन तत्प्रापकस्याबाधकत्वादित्यनुपदं स्पष्टीभविष्यति मूल इति भावः। यद्वा, तन्मूलशास्त्रादिति पञ्चमी षष्ठ्यर्थे बोध्येति, तेनानुषङ्गविभक्तिविपरिणामयोर्न श्रमः कर्तव्यः स्यात्। केचित्तु तन्मूलशास्त्रादिति बाधमूलशास्त्राद्बाधकरूपात्प्राप्तिमूलरागस्य यथा बाधस्तथा शास्त्रान्तरेण प्राप्तिमूलशास्त्रस्य बाधायोगादिति व्याचक्षते।

ननु यथा पदाधिकरणकहोमविधायकविशेषशास्त्रेणा आहवनीयाधिकरणहोमविधायकस्य सामान्यशास्त्रस्य बाधः क्रियते, तथाऽनुयाजेषु येयजामहमन्त्रप्रतिषेधकरूपविशेषशास्त्रेण यागसामान्ये तन्मन्त्रविधायकस्य सामान्यशास्त्रस्य बाधः कथं न क्रियत इत्याशङ्क्य परिहरति—न चेत्यादिना। न च वाच्यमित्यत्र हेतुमाह—परस्परेति। शास्त्रयोरेकविषये वाध्यबाधकभावे परस्परनिरपेक्षत्वं हेतुः पदशास्त्रस्य पदाधिकरणकहोमरूपस्वार्थविधानार्थमाहवनीयशास्त्रनिरपेक्षत्वादनुयाजेषु येयजामहमन्त्रप्रतिषेधकशास्त्रस्य तत्र प्रतिषेध्यमन्त्रप्रसक्त्यर्थं यजतिसामान्ये तादृशमन्त्रविधायकसामान्यशास्त्रसापेक्षत्वाच्चेति दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यं प्रदर्शयति—पदशास्त्रस्येत्यादिना। तथा च प्रतिषेधशास्त्रस्य विशेषविषयत्वेन प्रबलत्ववद्विधिशास्त्रस्याप्युपजीव्यत्वेन प्रबलत्वमस्तीति न प्रतिषेधशास्त्रेण विधिशास्त्रस्यात्यन्तबाधो युक्त इति विहितप्रतिषिद्धत्वाद्विकल्पः स्यात्, स च न युक्त इत्युपरिष्टात्स्पष्टीभविष्यतीति भावः।

बाधायोगमुपसंहरति—तस्मादिति। मन्त्रविधायकशास्त्रस्य तत्प्रतिषेधकशास्त्रेण बाधायोगाद्विहितस्यापि तेन प्रतिषेधे विकल्प एव स्यान्न बाध इत्यर्थः। ननु भवतु विकल्प एव तेन किं हीयत इत्यत आह—स चेति। विकल्पस्यायुक्तत्वे हेतुमाह—विकल्प इति। ननु विकल्पस्वीकारे कथं पक्षे शास्त्रस्याप्रामाण्यापात इत्यत आह—न हीति। यथा व्रीहिभिर्यागानुष्ठानसमये यवशास्त्रस्य न प्रामाण्यं भवति, तथा विधायकशास्त्रानुसारेण 'येयजामहे' इति मन्त्रस्यानुयाजेषूच्चारणानुष्ठानसमये न तत्प्रतिषेधकशास्त्रस्य प्रामाण्यं संभवतीत्यर्थः। किंच विकल्पपक्षे हि द्विरदृष्टकल्पनाप्रसङ्गोऽपि स्यात्, विधिशास्त्राद्ध्येवमवगम्यते यदनुयाजेषु 'येयजामह' इति मन्त्रस्य करणे कश्चनोपकारो भवतीति प्रतिषेधशास्त्रादपि तत्र तदकरणात्कश्चनोपकारो भवति। दर्शपूर्णमासयोरनृतवदनाकरणादिजन्योपकारवदित्यवगम्यते, तच्चोपकारद्वयमदृष्टरूपमिति द्विरदृष्टकल्पनाप्रसङ्ग इत्याह—द्विरदृष्टकल्पना चेति। तत्र हेतुमाह—विधीति। पुरुषार्थत्वादिति। विधानवत्प्रतिषेधस्याप्यदृष्टपुरुषार्थसंपादकत्वादित्यर्थः। तस्मान्नानुयाजेष्वित्यादौ प्रतिषेधस्वीकारे विकल्पादिदोषापत्तेर्नात्र प्रतिषेधः समाश्रीयते किंतु नञो नामसंबन्धमाश्रित्य पर्युदासस्यैवाश्रयणं क्रियत इत्युपसंहरति—अत इति।

नञर्थ का प्रत्ययार्थ के साथ अन्वय करने पर 'तस्य व्रतम्' आदि के अर्थ की सङ्गति नहीं बैठती, अतः वहाँ उसका बाध कर दिया गया। वह बाध का प्रथम उदाहरण था। यहाँ द्वितीय बाध का उदाहरण दिया जा रहा है। 'यजतिषु 'ये यजामहे' करोति नानुयाजेषु' यह आपस्तम्ब-श्रौतसूत्र (२४।१३।५) का वाक्य है। वैदिक-साहित्य का अंश होने से सूत्रग्रन्थ भी शास्त्र ही हैं। मूल में

'शास्त्र' पद का प्रयोग कई बार शास्त्रवाक्य के अर्थ में किया गया है। 'ये यजामहे' आदि एक मन्त्रविशेष है। इस पूरे पञ्चाक्षरसमूह 'ये यजामहे' को एक संज्ञापद के रूप में लिया गया है। 'यजतिषु' पद को देखने से लगता है कि यह 'यजति' क्रिया का वाचक है, किन्तु वस्तुतः यहाँ यह यज् धातु के अर्थ 'याग' का वाचक है। अर्थात् 'यजतिषु' का अर्थ 'यजति'क्रिया नहीं, अपितु 'याग' है।[1] इस प्रकार उक्त मन्त्र का सामान्य अर्थ यह हुआ—'यागों में 'ये यजामहे' मन्त्र का पाठ करना चाहिये अनुयाजों में नहीं।"

इस वाक्य में मुख्यतः दो भाग हैं (१) यजतिषु 'ये यजामहं' करोति, (२) नानुयाजेषु। इनमें पहला उपवाक्य पूर्ण है और दूसरे को अपनी पूर्णता के लिये प्रथम उपवाक्य के कुछ अंशों का अनुवाद अथवा अध्याहार अपेक्षित है। पूर्ववाक्य से "ये यजामहं' करोति" इतना अंश अर्थपूर्ति के लिये अनूदित कर लेने पर उत्तरवर्ती वाक्य बनेगा—"अनुयाजेषु 'ये यजामहं' न करोति" दोनो वाक्यों का क्रमशः अर्थ होगा १—यागों में 'ये यजामहे' मन्त्र का पाठ करे २—अनुयाजों में 'ये यजामहे' मन्त्र का पाठ न करे। इस अर्थ से स्पष्ट है कि नञर्थ का योग 'करोति' क्रिया के 'तिङ्' प्रत्यय के लिङर्थ से हुआ है। पूर्ववाक्य में वह नहीं लगा है, अतः वहाँ 'ये यजामहे' के उच्चारण में प्रवर्तना का बोधक है और दूसरे वाक्य में प्रत्ययार्थ से लगने पर निवर्तना का। इस प्रकार द्वितीय वाक्य में 'ये यजामहे' के पाठ का प्रतिषेध है। प्रतिषेध वहीं होता है जहाँ कोई पदार्थ राग या शास्त्र से प्राप्त होता है, अन्यत्र नहीं, क्योंकि जब तक कोई वस्तु होगी नहीं, तब तक उसका प्रतिषेध या निवारण कैसे किया जा सकता है। उदाहरणार्थ देखा जा सकता है कि कलञ्जभक्षण लोक में रागतः प्राप्त रहा, लोग विषबुझे वाणों से मारे गये पशुपक्षियों का मांस खाते रहे, अतः उसका निषेध 'कलञ्जं न भक्षयेत' से हुआ। यदि वह पूर्वतः प्राप्त न होता, तो प्रतिषेध किसका होगा?

'यजतिषु 'ये यजामहं' करोति' इस शास्त्रवाक्य से प्राप्त 'ये यजामहं' करोति" अंश का 'अनुयाजेषु 'ये यजामहं' न करोति" से बाध हो रहा है। दोनों शास्त्र वाक्य ही हैं, जिनमें एक से प्राप्त अंश का दूसरे द्वारा बाध या प्रतिषेध हो रहा है। किन्तु मीमांसकों के अनुसार जहाँ शास्त्र-वाक्य से प्राप्त अर्थ का दूसरे शास्त्रवाक्य से ही बाध हो रहा हो वहाँ बाध न मानकर विकल्प मानना चाहिये। बाध की स्थिति में बाधित का कार्य और सार्थकता वहीं समाप्त हो जाती है, किन्तु विकल्प में दोनों पक्षों की सार्थकता बनी रहती है, यह प्रयोक्ता पर निर्भर करता है कि वह दोनों में से किसका ग्रहण करता है। जहाँ राग से प्राप्त का शास्त्र से प्रतिषेध हो, वहाँ रागप्राप्त का शास्त्रप्राप्त से बाध हो ही जाता है, वहाँ शास्त्र प्रबल पड़ता है, जैसे 'न कलञ्जं भक्षयेत' में।

यहाँ स्पष्ट है कि एक शास्त्रवाक्य से प्राप्त का दूसरे शास्त्र से प्राप्त पदार्थ बाध कर रहा है, अतः नियमानुसार बाध न करके 'विकल्प' किया जायेगा। विकल्प दोष है। यहाँ दोष यह इसीलिये आया क्योंकि नञर्थ का योग प्रत्ययार्थ से किया गया। इसी दोष को दूर करने के लिये पर्युदास का आश्रय लिया जाता है। मूलग्रन्थ में प्रयुक्त 'विकल्पप्रसक्तौ च पर्युदासाश्रयणात्' का यही आशय है। यह वाक्य अपूर्ण-सा प्रतीत होता है। इसे वस्तुतः स्पष्टार्थता के लिये इस प्रकार होना चाहिये—अत्र (नञर्थेन प्रत्ययार्थान्वये सति) विकल्पप्रसक्तौ पर्युदासाश्रयणात् (इष्टार्थप्रतीतिः) अर्थात् "यजतिषु…नानुयाजेषु" में जो पर्युदास का अवलम्ब लिया जा रहा है वह विकल्पप्रसक्ति दोष को दूर करने के लिये ही। इस प्रकार विकल्पप्रसक्ति की ही नञर्थ के साथ प्रत्ययार्थ के अन्वय में बाधकता हैं।[2]

---

१. यजतिषु इति यजतिशब्दोऽत्र न धातुवाची किन्तु धात्वर्थवाची। तेन यागमात्रे इत्यर्थः। प्रतिपादिका पृ० १४१.

२. अत्र यत् पर्य्युदासाश्रयणं तद्विकल्पप्रसक्तिहेतुकमेवेत्यर्थः। तथा चात्र विकल्पप्रसक्तेरेव नञर्थेन प्रत्ययार्थान्वये बाधकत्वमिति। प्रतिपादिका पृ० १४२.

कहीं-कहीं एक शास्त्रवाक्य का दूसरे शास्त्रवाक्य से बाध भी होता है, किन्तु उनकी तथा 'यजतिषु ···नानुयाजेषु' की परिस्थितियों में अन्तर है। जैसे 'पदे जुहोति'—गाय के सप्तम पदचिह्न पर होम करना चाहिये—इस विशेष शास्त्रवाक्य से 'आहवनीये जुहोति'—आहवनीय नामकी अग्नि में हवन करना चाहिये—इस शास्त्रवाक्य का बाध हो रहा है। इनमें बाध्यबाधकभाव इसलिये बन रहा है क्योंकि दोनों निरपेक्ष हैं। किसी भी वाक्य को अपनी अर्थपूर्ति के लिये दूसरे पर आश्रित नहीं रहना पड़ता है। जब कि 'यजतिषु' ये यजामहे करोति' इस वाक्यांश के अभाव में 'नानुयाजेषु' वाक्यांश अपना अर्थ स्पष्ट नहीं कर सकता, अतः यह अपने पूर्ववर्ती पर आश्रित है। कहा जा चुका है कि बाध या प्रतिषेध पूर्वतः प्राप्त का होता है। यहाँ पूर्वप्राप्त है 'ये यजामहे' करोति", यही निषेध्य है, किन्तु इसकी प्राप्ति के लिये 'नानुयाजेषु' को पूर्णतः आश्रित रहना पड़ रहा है। यह अपने पूर्ववाक्य के अभाव में अपने अर्थ का बोध कराने में असमर्थ होने से उस पर पूर्णता आश्रित है, अतः निरपेक्ष नहीं है। अतः यहाँ प्रतिषेध के स्थान पर विकल्प ही का ग्रहण अपेक्षित है।

विकल्प भी निरापद स्थिति नहीं है। यह भी एक दोष ही है। विकल्प में पाक्षिक अप्रामाण्य होगा। अर्थात् प्राप्त दो विधियों में से जिसका अनुष्ठान होगा वह तो प्रामाणिक माना जायेगा और जिसको छोड़ दिया जायेगा वह अप्रामाणिक सिद्ध होगा। विकल्प में दो में से एक का ही अनुष्ठान अपेक्षित होता है, दोनों का नहीं। उदाहरणार्थ—अनुयाजो में 'ये यजामहे' मन्त्र का अनुष्ठान करने से 'नानुयाजेषु' का अप्रामाण्य हो जायेगा। 'व्रीहिभिर्यजेत यवैर्वा" यह विकल्प को समझाने में प्रायः उद्धृत किया जाने वाला वाक्य है। इसका अर्थ है 'व्रीहिभिर्यजेत' 'यवैर्यजेत' दोनों में से किसी एक के अनुसार होम करना। यदि व्रीहि से याग का अनुष्ठान किया गया, तो वैकल्पिक होने से 'यव' से याग नहीं किया जायेगा। ऐसी स्थिति में 'यव' का विधान होना और न होना दोनों समान है, अर्थात् उसकी कोई आवश्यकता नहीं रह गयी, वह अप्रामाणिक हो गया। इसी प्रकार यवशास्त्र का ग्रहण करने पर व्रीहिशास्त्र अप्रामाणिक होगा।[1]

इसी प्रकार 'नानुयाजेषु' के विषय में भी समझना चाहिये। यहाँ सामान्यतः यह भ्रम हो सकता है कि 'यजतिषु 'ये यजामहे' करोति' यह एक पक्ष है और 'नानुयाजेषु' यह दूसरा, अतः प्रथम का अनुष्ठान करने पर द्वितीय का अप्रामाण्य होगा और द्वितीय का अनुष्ठान करने पर प्रथम का, किन्तु ग्रन्थकार का अभीष्ट दूसरा है। उसके अनुसार 'नानुयाजेषु' में वैकल्पिक स्थितियों का निर्धारण करना चाहिये। इसके दोनों वैकल्पिक प्रयोग इस प्रकार होंगे—( १ ) अनुयाजेषु 'ये यजामहे' करोति', ( २ ) अनुयाजेषु 'ये यजामहे' न करोति। इन दोनों में प्रथम के अनुसार 'ये यजामहे' का उच्चारण करने पर 'अनुयाजेषु 'ये यजामहे' न करोति ( अर्थात् नानुयाजेषु' ) का अप्रामाण्य होगा। इसी प्रकार 'अनुयाजेषु' ये यजामहे' न करोति' के अनुसार अनुष्ठान करने पर 'अनुयाजेषु 'ये यजामहे' करोति' की अप्रामाणिकता होगी।[2] यदि अर्थसंग्रहकार को 'यजतिषु० आदि' तथा 'नानुयाजेषु' में वैकल्पिकता मान्य होती तो मूलग्रन्थ के पाठ में 'न ह्यनुयाजेषु' के स्थान पर 'न हि यजतिषु' पाठ होता। विकल्प स्वीकार करने पर पाक्षिक अप्रामाणिकता नाम का दोष तो होता ही है 'दो अदृष्टों की कल्पना' नाम का एक और भी दोष उपस्थित होता है। जहाँ 'व्रीहि से होम' किया जायेगा वहाँ यव से नहीं और जहाँ यव से वहाँ व्रीहि से नहीं। जिससे अनुष्ठान किया जायेगा उससे अनुष्ठान के कारण एक अदृष्ट की उत्पत्ति मानी जायेगी, किन्तु विकल्पस्थिति में जिससे अनुष्ठान नहीं किया जायेगा उससे भी एक अदृष्ट की उत्पत्ति मानी

१. यवशास्त्रस्येवेति। यदा व्रीहिप्रयोगे यवशास्त्राप्रामाण्यं, यवप्रयोगे च व्रीहिशास्त्रस्य, तद्वदित्यर्थः। प्रतिपादिका पृ० १४६.

२. इदमुपलक्षणम्। एवं नानुयाजेष्वित्यस्य पालनेऽपि 'ये यजामहे' मित्यस्य प्रामाण्यं न संभवतीत्यपि द्रष्टव्यम्। वही पृ० १४६.

जायेगी। यदि ऐसा नहीं होगा तो वैकल्पिक अनुष्ठान को न करने की अनुमति देने वाला शास्त्र निरर्थक हो जायेगा। वस्तुतः वैकल्पिक स्थिति में जिस प्रकार एक पदार्थ से अनुष्ठान करना अभीष्ट है—पुरुषार्थ है—उसी प्रकार दूसरे से न करना भी अभीष्ट है—पुरुषार्थ है—अर्थात् विधि और निषेध दोनों की अपनी-अपनी सार्थकता है। यदि 'नानुयाजेषु' आदि प्रसंग में वैकल्पिक स्थिति स्वीकार की गयी तो विधि और निषेध दोनों पक्षों के लिये अलग-अलग एक-एक अर्थात् दो अदृष्ट मानने पड़ेंगे। जहाँ एक ही अदृष्ट से काम चल रहा हो वहाँ दो-दो मानना गौरवदोष है। यहाँ पर्युदास का आश्रय लेने पर न विकल्पप्रसक्ति होती है, न दो अदृष्ट ही मानना पड़ता है। उसमें लाघव है, इसीलिये नञर्थ का प्रत्ययार्थ से अन्वय न मानकर पर्युदास का ग्रहण करना उचित होता है—

यत एव विकल्पोऽयं प्रतिषेधे प्रसज्यते।
अतस्तत्परिहाराय पर्य्युदासाश्रयो वरम्॥

'व्रीहिभिर्यजेत यवैर्वा' के प्रसङ्ग में अगत्या विकल्प मानना पड़ता है, वहाँ पर्युदास से काम नहीं चलता। अतः दोष होने पर भी उस स्थिति में विकल्प और उसके सभी दोषों को सहना पड़ता है—

एवमेषोऽष्टदोषोऽपि यद्व्रीहियवशास्त्रयोः।
विकल्प आश्रितस्तत्र गतिरन्या न विद्यते॥

**(६१) इत्थं चानुयाजव्यतिरिक्तेषु 'यजतिषु येयजामह' इति मन्त्रं कुर्यादिति वाक्यार्थबोधः, नञोऽनुयाजव्यतिरिक्ते लाक्षणिकत्वात्। एवं च न विकल्पः। अत्र च वाक्ये येयजामह इति न विधीयते, यजतिषु येयजामहमित्यनेनैव प्राप्तत्वात्। किंतु सामान्यशास्त्रप्राप्त-येयजामह इत्यनुवादेन तस्यानुयाजव्यतिरिक्तविषयकत्वं विधीयते। यद्यजतिषु येयजामहं करोति तदनुयाजव्यतिरिक्तेष्विति।**

पर्युदासोपसंहारयोर्भेदवर्णनम्

**नन्वेवं सामान्यशास्त्रप्राप्तस्य विशेषे संकोचनरूपादुपसंहारात्पर्युदासस्य भेदो न स्यादिति चेन्न। उपसंहारो हि तन्मात्रसंकोचार्थः। यथा 'पुरोडाशं चतुर्धा करोतीति' सामान्यप्राप्तचतुर्धाकरणम् 'आग्नेयं चतुर्धा करोतीति' विशेषादाग्नेयपुरोडाशमात्रे संकोच्यते। पर्युदासस्तु तदन्यमात्रसंकोचार्थ इति ततो भेदः (भेदात्)।**

इस प्रकार 'अनुयाजों से भिन्न यागों में, 'ये यजामहे' इस मन्त्र का उच्चारण करना चाहिये' इस वाक्यार्थ का ज्ञान होता है, नञ् का अनुयाज से भिन्न अर्थ लक्षणा से होता है। इस प्रकार विकल्प नहीं होता है। इस वाक्य में 'ये यजामहे' इस मन्त्र का विधान नहीं होता, क्योंकि इसकी प्राप्ति 'यजतिषु ये 'यजामहं' करोति' इस मन्त्र से होती है। अपितु सामान्य शास्त्रवाक्य से प्राप्त 'ये यजामहे' इस मन्त्र के अनुवाद द्वारा उसका विषय अनुयाज व्यतिरिक्त विहित होता है—कि-जो यागों में 'ये यजामहे' इस मन्त्र का पाठ होना चाहिये, वह अनुयाज से भिन्नों में ही।

यह बात नहीं है कि सामान्यविधायक वाक्य से प्राप्त अर्थ का विशेष में सङ्कोचरूप वाले उपसंहार से पर्युदास का भेद ही नहीं होगा। वस्तुतः विशेषमात्र में सङ्कोच करने वाला उपसंहार है—जैसे 'पुरोडाश को चार भागों में बाँटता है' यह सामान्यशास्त्र से प्राप्त चार भागों में विभाजन, 'आग्नेयं चतुर्धा करोति'-अग्निदेवता से सम्बद्ध पुरोडाश को चार भागों में विभक्त करता है' इस विशेष शास्त्रवाक्य के कारण आग्नेय पुरोडाशमात्र में सङ्कुचित कर

दिया जाता है। और पर्युदास तो उससे भिन्न में ही सङ्कोच के लिये होता है, यह उससे इसका भेद है।

एवं च 'नानुयाजेषु येयजामहं करोती'-त्यस्य वाक्यस्यार्थमाह--इत्थं चेति। अनेन पूर्वोक्तप्रकारेण चेत्यर्थः। अत्र पर्युदासस्य तात्पर्यविषयत्वेन करोतेरवतारितस्य नञोऽनुयाजशब्देन संबन्धसिद्धौ चेति यावत्। तत्र हेतुमाह—नञ इति। अनुयाजव्यतिरक्तेऽनुयाजत्वाभावस्य सत्त्वाच्छक्यसम्बन्धसंभवेन लक्षणोपपत्तिरिति भावः। अत्र प्रतिषेधपक्षं परित्यज्य पर्युदासपक्षस्वीकारस्य फलमाह–एवं चेति। ननु 'नानुयाजेषु येयजामहं करोती'त्यत्र 'येयजामह' इति मन्त्रविधौ तस्यानुयाजव्यतिरिक्तविषयत्वविधौ च वाक्यभेदः स्यादित्यत आह--अत्र चेति। सामान्यशास्त्रेति। 'यजतिषु येयजामहं करोती'ति यजिसामान्ये तद्विधायकशास्त्रप्राप्तमेव 'येयजामह' इति मन्त्रमनूद्य 'नानुयाजेषु येयजामहं करोती'त्यत्र तस्यानुयाजव्यतिरिक्तविषयता विधीयत इत्यर्थः। तथा च यजतिष्वित्यादिसामान्यशास्त्रस्य विशेषापेक्षिणो नानुयाजेष्वित्यादिविशेषशास्त्रेणानुयाजव्यतिरिक्तविषयसमर्पणादनुयाजव्यतिरिक्तयागेषु 'येयजामह' इति मन्त्रः कर्तव्यतया प्राप्तः। अनुयाजेषु तु तस्य कर्तव्यत्वेनाप्राप्तत्वादप्रतिषिद्धत्वाच्च नात्र विकल्पप्रसङ्गोऽपि संभवति। लक्षणयानुयाजव्यतिरिक्तविषयसमर्पणाच्च न नानुयाजेष्वित्यादिवाक्यस्याप्रामाण्यमपि भवति। तस्मात्पर्युदासाश्रयणे बाधकाभावात् स एव स्वीकर्तव्य इति भावः।

ननु पर्युदासाश्रयणपक्षे 'यजतिषु येयजामहं करोती'ति सामान्यशास्त्रेण यागमात्रे प्राप्तस्य 'ये यजामह' इति मन्त्रस्य 'नानुयाजेषु येयजामहं करोती'ति विशेषशास्त्रेणानुयाजव्यतिरिक्तविषये यागविशेषे संकोचनात् पर्युदासस्योपसंहारादभेदापत्तिः स्यात्। सामान्ये प्राप्तस्य विशेषे संकोचस्यैवोपसंहारपदार्थत्वात्। यथा 'पुरोडाशं चतुर्धा करोती'ति पुरोडाशसामान्ये प्राप्तस्य चतुर्धाकरणस्य 'आग्नेयं चतुर्धा करोती'त्याग्नेये विशेषे संकोच इत्याशङ्कते--नन्वेवमिति। 'पुरोडाशं चतुर्धा करोती'त्यनेन पुरोडाशसामान्ये प्राप्तस्य चतुर्धाकरणस्य 'आग्नेयं चतुर्धा करोती'त्यनेन च पुरोडाशविशेषमात्रे संकोचः क्रियते। प्रकृते तु यजतिष्वित्यादिना यजतिसामान्ये प्राप्तस्य 'येयजामह' इति मन्त्रस्य नानुयाजेष्वित्यादिना यजतिविशेषादनुयाजरूपादन्यमात्रे यजतिविशेषे संकोच इत्युपसंहारात् पर्युदासस्य भेदः स्पष्ट एवेति परिहरति--नेत्यादिना। तन्मात्रसंकोचार्थ इति। सामान्यप्राप्तस्य विशेषमात्रसंकोचार्थ इत्यर्थः। तत्रोदाहरणमाह--यथेति। तदन्यमात्रसंकोचार्थ इति। सामान्यप्राप्तस्य विशेषादन्यमात्रसंकोचार्थ इत्यर्थः। इति ततो भेदादिति। एवमुक्तप्रकारेणोपसंहारात् पर्युदासस्य भेदान्न तयोरभेदापत्तिरित्यर्थः। अपरे तूपसंहारो नाम सामान्यतः प्राप्तस्य विशेषे संकोचनरूपो विधेर्व्यापारविशेषः, पर्युदासस्तु 'पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञि'त्यभियुक्तोक्त्या प्रत्ययातिरिक्तेन नाम्ना धातुना च नञः संबन्धरूपः। तस्मादनयोस्तावत्स्वरूपतः स्पष्ट एव भेद इति न तयोरभेदापत्तिरित्याहुः।

पहले यह बतलाया गया है कि पर्युदास के आश्रयण से 'यजतिषु ये यजामहं०' आदि का अर्थ होता है—'अनुयाजों को छोड़कर सभी यागों में 'ये यजामहे' मन्त्र का पाठ होता है। इससे यह स्पष्ट हो गया कि यहाँ नञर्थ का अन्वय 'करोति' के प्रत्ययार्थ से नहीं हुआ है, अन्यथा

निवर्तना अर्थ हो जाता। यहाँ 'अनुयाजेषु' इस सुबन्त पद के साथ नञ् का योग हुआ है। अनुयाज+नञ्। नञ् विरोधी का अर्थ प्रकट करता है, अतः नञर्थ से युक्त अनुयाज का अर्थ हुआ–अनुयाज के विरोधी, किन्तु नानुयाजेषु का निर्गलित अर्थ दिया जा रहा है–अनुयाज-व्यतिरिक्त। निश्चित ही 'भिन्न' और 'विरोधी' अलग-अलग अर्थों का प्रत्यायन कराते हैं। जो वस्तु किसी वस्तु से भिन्न है—दोनों में अन्योन्याभाव है—वे परस्पर विरोधी भी हों, आवश्यक नहीं। शास्त्रकारों के अनुसार 'विरोधी' अर्थ अभिधाशक्ति से प्राप्त होता है और 'भिन्न' अर्थ लक्षणा से। अभिधेय अर्थ का ग्रहण करने पर एक वाक्यताभङ्ग होता, अतः मुख्यार्थ का बाध करके लक्ष्य अर्थ लिया गया।

यागों में 'ये यजामहे' मन्त्र के प्राप्त होने से और अनुयाजों में प्राप्त न होने से दोनों की स्थिति दो प्रकार की हो गई, अतः यहाँ विकल्प नहीं होगा। अनुयाजों में न तो 'ये यजामहे' कर्त्तव्यरूप में प्राप्त होता है और न उसका प्रतिषेध ही होता है, अतः वैकल्पिक स्थिति यहाँ भी नहीं रहती।

पर्युदास को उपसंहार नहीं कहा जा सकता। यद्यपि दोनों में सङ्कोचन व्यापार होता है, तथापि दोनों के प्रकार में भिन्नता है। उपसंहार में कोई कार्य सामान्यशास्त्रवाक्य से विहित होता है, किन्तु विशेषवाक्य के द्वारा पूर्वप्राप्त कार्य को एक विशिष्ट पदार्थ में सीमित कर दिया जाता है। जैसे 'पुरोडाशं चतुर्धा करोति' यह एक सामान्यशास्त्र है जिससे किसी भी देवता से सम्बद्ध पुरोडाश का चार भागों में विभाजन प्राप्त है। सामान्यशास्त्र वह मन्त्रवाक्य होता है जिसमें निर्दिष्ट विधान किसी एक के साथ न होकर अनेकों के साथ लागू होता है, किन्तु विशेष शास्त्र सब में प्रवर्तन न करा कर एक विशेष में ही नियुक्ति करता है। 'आग्नेयं चतुर्धा करोति' एक विशेष वाक्य है जिसके द्वारा चतुर्धाकरण कर्म केवल आग्नेय पुरोडाश तक सीमित कर दिया जाता है, अग्नीषामीय और ऐन्द्र में नहीं। पर्युदास में कर्म का सङ्कोच विशेष से भिन्न में होता है। जैसे अनुयाज विशेष कर्म है, याग ऐसा कर्म है जो किसी भी विहित कर्म के लिये प्रयुक्त हो सकता हैं। पर्युदास के द्वारा 'ये यजामहे' मन्त्र का विधान सीमित अनुयाजों से भिन्न समस्त यागों में प्राप्त होता है। इस प्रकार उपसंहार में सामान्य को छोड़ विशेष की ओर प्रवृत्ति होती है और पर्युदास में विशेष को छोड़ कर सामान्य की ओर, यही दोनों का मुख्य अन्तर है।

**( ६२ ) कुत्रचिद्विकल्पप्रसक्तावप्यनन्यगत्या प्रतिषेधाश्रयणम्। यथा 'नातिरात्रे षोडशिनं गृह्णाती'त्यादौ। अत्र हि 'अतिरात्रे षोडशिनं गृह्णाती'ति शास्त्रप्राप्तषोडशिग्रहणस्य निषेधाद्विकल्पप्रसक्तावपि न पर्युदासाश्रयणम्, असंभवात्।**

**तथा हि—यद्यत्र षोडशिपदार्थेन नञर्थान्वयस्तदातिरात्रे षोडशिव्यतिरिक्तं गृह्णातीति वाक्यार्थबोधः स्यात्, स च न संभवति, अतिरात्रे षोडशिनं गृह्णातीति प्रत्यक्षविधिविरोधात्। यदि चातिरात्रेण पदार्थेनान्वयस्तदातिरात्रव्यतिरिक्ते षोडशिनं गृह्णातीति वाक्यार्थबोधः स्यात्, सोऽपि न संभवति, तद्विधिविरोधात्। अतोऽत्रानन्यगत्या शास्त्रप्राप्तषोडशिग्रहणस्यैव निषेधः। न च विकल्पप्रसक्तिस्त-स्याप्यपेक्षणीयत्वात्।**

कहीं-कहीं विकल्पप्रसक्ति होने पर भी कोई अन्य उपाय न होने से प्रतिषेध का आश्रयण किया ही जाता है। जैसे—'नातिरात्रे षोडशिनं गृह्णाति—'अतिरात्र में षोडशी को ग्रहण नही करता'—आदि में। यहाँ 'अतिरात्रे षोडशिनं गृह्णाति' इस शास्त्र से प्राप्त षोडशि-

ग्रहण के निषेध से विकल्पप्रसक्ति होने पर भी पर्युदास का आश्रय नहीं लिया जाता, क्योंकि वह असंभव है।

जैसे कि-यदि यहाँ (नातिरात्रे० आदि में) षोडशी पदार्थ के साथ नञर्थ का अन्वय किया जाये तो वाक्यार्थ होगा—अतिरात्र में षोडशी से भिन्न पदार्थ का ग्रहण करता है', और यह अर्थ संभव ही नहीं है, क्योंकि 'अतिरात्रे षोडशिनं गृह्णाति' इस प्रत्यक्षविधिवाक्य से उसका विरोध है। और यदि अतिरात्र पद के अर्थ के साथ नञर्थ का अन्वय हो तो भी अतिरात्र से भिन्न में षोडशी का ग्रहण करता है, यह वाक्य के अर्थ का बोध होगा। यह अर्थ भी संभव नहीं है, क्योंकि इसका भी पहले की साक्षात् विधि—'अतिरात्रे षोडशिनं गृह्णाति'—से विरोध है। इसलिये यहाँ (इस प्रसंग में) और कोई उपाय न होने से शास्त्रप्राप्त षोडशी के ग्रहण का ही निषेध अभीष्ट है। यह नहीं कहना चाहिये कि यहाँ विकल्पप्रसक्ति होने से दोष हैं, क्योंकि उसकी भी यहाँ अपेक्षा है।

**किंच यत्र तु पर्युदास आश्रयितुं न शक्यते तत्र विकल्पप्रसक्तावपि निषेध एवाश्रीयत इत्याह**—कुत्रचिदिति। अनन्यगत्येति। **प्रतिषेधादन्यगतिविशेषस्य पर्युदासस्यासंभवेनेत्यर्थः। तत्रोदाहरणमाह**—यथेति। **नातिरात्र इत्यादिवाक्ये प्रतिषेध एवाश्रीयते, नतु पर्युदासः। अत्र चातिरात्र इत्यादिशास्त्रेण प्राप्तस्य षोडशिनामकपात्रविशेषग्रहणस्य प्रतिषेधाद्विकल्पप्रसङ्गेऽपि पर्युदासाश्रयणासंभवादित्याह**—अत्र हीत्यादिना।

**अत्र पर्युदासाश्रयणासंभवमुपपादयति**—तथा हीत्यादिना। अत्रेति। **नातिरात्रे षोडशिनं गृह्णातीत्यत्रेत्यर्थः।** षोडशिपदार्थेन नञर्थान्वय इति। **अतिरात्रे न षोडशिनं गृह्णातीत्यन्वय इत्यर्थः। एतदन्वयपक्षे वाक्यार्थमाह**—तदेति। **एतादृशवाक्यार्थासंभवे हेतुमाह**—अतिरात्रे षोडशिनमिति। **अत्र पर्युदासोपपत्तयेऽन्वयान्तरमाह**—यदीति। अन्वय इति। **नञर्थस्येतिशेषः। निरुक्तान्वयानुरोधेन वाक्यार्थबोधासंभवेऽपि हेतुमाह**—तद्विधिविरोधादिति। **अतिरात्रे षोडशिनं गृह्णातीत्यतिरात्रयागे षोडशिग्रहणविधायकप्रत्यक्षविधिविरोधादित्यर्थः। उपपादितमुपसंहरति**—अत इति। **उक्तदोषप्रसङ्गादस्मिन्वाक्ये प्रतिषेधान्यासंभवेन प्रतिषेध एव स्वीक्रियत इत्यर्थः। अत्र प्रतिषेधे सिद्धान्तिते विकल्पप्रसङ्गमाशङ्क्येष्टापत्त्या परिहरति**—न चेत्यादिना। **अत्रेदं बोध्यम्—यत्र तस्य व्रतमित्याद्युपक्रमो नास्ति, विकल्पाप्रसक्तिश्च तत्र प्रतिषेधो भवति, यथा न कलञ्जं भक्षयेदिति। यत्र तु विकल्पप्रसङ्गेऽपि पर्युदासो नाश्रयितुं शक्यते तत्र प्रतिषेध एव स्वीक्रियते यथा नातिरात्रे षोडशिनं गृह्णातीति।**

अतिरात्र एक यागविशेष का नाम है और षोडशी उसमें प्रयुक्त होने वाला पात्रविशेष। यहाँ यह प्रकट किया गया है कि सामान्यतः नञर्थ का प्रत्ययार्थ से अन्वय होकर निषेधार्थ सम्पन्न होता है, किन्तु कुछ स्थल ऐसे भी हैं जहाँ ऐसा करने से एकवाक्यता नहीं सिद्ध हो पाती और अर्थसंगति नहीं बैठती, अतः प्रत्ययार्थ के स्थान पर धात्वर्थ से नञर्थ का अन्वय कर दिया जाता है, जैसे 'तस्य व्रतम्' के प्रसङ्ग में अनीक्षणसङ्कल्प रूप अर्थ, कहीं सुबन्त पदों के साथ नञ् का अन्वय कर दिया जाता है जिससे विकल्पप्रसक्ति नाम के दोष से बचा जा सके, जैसे 'नानुयाजेषु' में। किन्तु कुछ स्थल ऐसे भी हैं जहाँ विकल्प भी रहता है और प्रतिषेध भी—अर्थात् विकल्प रहते हुए भी पर्युदास से उसका परिमार्जन नहीं हो सकता, अतः अगत्या नञर्थ का प्रत्ययार्थ से योग करना ही पड़ता है। इसका उदाहरण ग्रन्थ में विस्तार से दिया गया है।

विकल्पे प्रतिषिध्यमानस्यानर्थहेतुत्वाभावः

**( ६३ ) इयांस्तु विशेषो यद्विकल्पादेकप्रतिषेधेऽपि प्रतिषिध्यमानस्य नानर्थहेतुत्वम् विधिनिषेधोभयस्यापि क्रत्वर्थत्वात् । यत्र तु न विकल्पः, प्राप्तिश्च रागत एव, प्रतिषेधश्च पुरुषार्थः तत्र प्रतिषिध्यमानस्यानर्थहेतुत्वम्, यथा 'न कलञ्जं भक्षये' दित्यादौ कलञ्जभक्षणादेः, तत्र भक्षणनिषेधस्यैव पुरुषार्थत्वात् ।**

**न च 'दीक्षितो न ददाति न जुहोती'त्यादौ शास्त्रप्राप्तदानहोमादीनां निषेधाद्विकल्पापत्तिरिति वाच्यम् । स्वतःपुरुषार्थभूतदानहोमादीनां निषेधस्य पुरुषार्थत्वाभावेऽपि निषिध्यमानस्यानर्थहेतुत्वात्, यथा क्रतौ स्वस्त्रीगमनादेः, तन्निषेधस्य क्रत्वर्थत्वेन तस्य क्रतुवैगुण्यसंपादकत्वात् ।**

यहाँ—वर्तमान वैकल्पिक स्थिति में—इतनी विशेषता है, कि विकल्प के कारण एक का प्रतिषेध होने पर भी निषेध्य अनर्थ का कारण नहीं बनता, क्योंकि विधि और निषेध दोनों यज्ञार्थ ही होते हैं। जहाँ विकल्प नहीं है, प्राप्ति भी राग से ही होती है और प्रतिषेध ही पुरुषार्थ होता है, वहाँ निषेध्य अनर्थ का हेतु होता है—जैसे 'न कलञ्जं भक्षयेत्' आदि में कलञ्जभक्षण आदि, क्योंकि वहाँ भक्षण का निषेध ही पुरुषार्थ है।

यह नहीं कहना चाहिये कि 'दीक्षितो न ददाति न जुहोति' इत्यादि वाक्यों में शास्त्र-विहित दान, होम आदि के निषेध से विकल्प की प्राप्ति हो जायेगी, क्योंकि अपने आप में पुरुषार्थभूत दान, होम आदि के निषेध में पुरुषार्थता का अभाव होने पर भी निषेध्य की अनर्थ में कारणता है, जैसे यज्ञ में अपनी पत्नी से सहवास आदि की, किन्तु उस ( स्वस्त्री-गमन आदि ) के निषेध की क्रत्वर्थता होने से और उसकी यज्ञ में वैगुण्य की सम्पादकता से अनर्थ का कारण बनता है।

ननु नातिरात्रे षोडशिनं गृह्णातीत्यत्र विकल्पप्रसङ्गेऽपि यदि षोडशिग्रहणस्य प्रतिषेध एव स्वीक्रियते तदा प्रतिषिध्यमानस्यानर्थहेतुत्वस्वीकारात् षोडशिग्रहणस्यापि कलञ्जभक्षणादिवत्प्रतिषिध्यमानत्वेनानर्थहेतुत्वादर्थत्वबाधापत्तिरित्याशङ्क्याह—इयांस्त्वित्यादिना । प्रतिषिध्यमानयोरनर्थहेतुत्वतदभावरूपो विशेष इत्यर्थः । विकल्पादिति । यत्र प्रतिषेधस्य विकल्पापादकत्वं तत्रैकस्य प्रतिषेधेऽपि न प्रतिषिध्यमानस्यानर्थहेतुत्वमित्यर्थः । तत्र हेतुमाह—विधीति । रागत एवेत्येवकारेण षोडशिग्रहणादिवच्छास्त्रेण प्राप्तिः प्रतिषिध्यते । अत्र निषिध्यमानस्यानर्थहेतुत्वे हेतुमाह—तत्रेति । षोडशिग्रहणविधितत्प्रतिषेधयोरुभयोरपि क्रत्वर्थत्वात्तत्र प्रतिषिध्यमानस्य नानर्थहेतुत्वम् । अत्र तु कलञ्जभक्षणादिप्रतिषेधस्यैव पुरुषार्थत्वं नतु तदनुष्ठानस्येति प्रतिषिध्यमानस्य कलञ्जभक्षणब्राह्मणहननादेरनर्थहेतुत्वमेवेति भावः ।

ननु यथा शास्त्रप्राप्तस्य षोडशिग्रहणस्य प्रतिषेधे विकल्पः स्वीकृतः, तथा शास्त्रप्राप्तदानादीनामपि प्रतिषेधे विकल्पापत्तिः स्यादिति दृष्टान्ताभिप्रायेणातिप्रसङ्गमाशङ्क्य परिहरति—न चेत्यादिना । स्वत इति । स्वतः पुरुषार्थभूतदानहोमादीनां पुरुषार्थत्वेनैव शास्त्रप्राप्तिः, क्रत्वर्थत्वेनैव च प्रतिषेध इति षोडशिग्रहणविधितत्प्रतिषेधयोरुभयोस्तुल्यर्थत्वाभावेन न विकल्पापत्तिः । किंच रागतः प्राप्तस्य पुरुषार्थत्वेन प्रतिषेधे प्रतिषिध्य-

मानस्य कलञ्जभक्षणादिवदनर्थहेतुत्वस्वीकारान्न दानहोमादेः प्रतिषिध्यमानस्याप्यनर्थहेतुत्वं संभवति, तस्य रागतः प्राप्तत्वाभावात्, कलञ्जभक्षणादिप्रतिषेधवत्तत्प्रतिषेधस्य पुरुषार्थत्वाभावाच्चेति, भावः ॥ अत्रेदं बोध्यम्—ज्योतिष्टोमे श्रूयते 'दीक्षितो न ददाति न जुहोति न पचती'ति । तत्र यद्दानादिकं पुरुषार्थः यच्च क्रत्वर्थं तत्राप्युपदिष्टमतिदिष्टं च तत्सर्वं प्रतिषिध्यते । कुतः ? न ददातीत्यादिवचनस्य सामान्यरूपत्वादित्याद्यः पक्षः । अग्निहोत्रदानादेरुपदिष्टस्यापि प्रतिषेधे सत्युपदेशो व्यर्थः स्यादिति ततोऽतिदिष्टं पुमर्थं चेत्येतदुभयमेव प्रतिषिध्यते क्रत्वर्थत्वेनोपदिष्टं दानादिकमनुष्ठेयमिति मध्यमः पक्षः । नित्याग्निहोत्रदानादिकं पुरुषार्थत्वेन यत्प्रत्यक्षश्रुतावुपदिष्टं ज्योतिष्टोमकालेऽपि प्राप्तं यच्चातिदिष्टं दानादिकं तयोरुभयोर्मध्ये प्रत्यक्षोपदिष्टनिषेधस्योपदिष्टमेव संनिहितमिति पुमर्थस्यैवात्र निषेधः । न च नित्याग्निहोत्रदानादौ विधिनिषेधयोः प्रवृत्त्या विकल्पः शङ्क्यः, भिन्नविषयत्वात् । क्रत्वर्थो निषेधः क्रतुकाले तदनुष्ठानं वारयति । पुरुषार्थस्तु विधिः कालान्तरे तदनुष्ठापयति तस्मात्पुमर्थस्य निषेध इति । यदि प्रतिषेधपक्षे वाक्यभेदः शङ्क्येत, तर्हि पुमर्थदानादिव्यतिरिक्तं क्रतुकालेऽनुष्ठेयमिति पर्युदासोऽस्तु । ननु यत्र रागतः प्राप्तस्य प्रतिषेधः पुरुषार्थो भवति, तत्र प्रतिषिध्यमानस्यानर्थहेतुत्वं यथा कलञ्जभक्षणादेः, क्रतौ स्वस्त्रीगमनप्रतिषेधस्य तु पुरुषार्थत्वाभावात्तत्र निषिध्यमानस्य स्वस्त्रीगमनस्य कथमनर्थहेतुत्वमित्यत आह—निषेधस्येति । यद्वा,–निषेधस्येत्यादिपूर्वमेवान्वेति तत्र प्रसिद्धचर्थं तु यथा क्रतावित्यादिकमेव भवति । तथा च स्वतः पुरुषार्थेत्यादेरयमर्थः–स्वत इति क्रत्वङ्गत्वोपाधिमन्तरेण केवलस्वरूपत एव पुमर्थभूतानां दानादीनां निषेधस्य पुरुषार्थत्वाभावेऽपि क्रत्वर्थत्वसंभवान्निषिध्यमानस्य दानादेः क्रतुवैगुण्यसंपादकत्वेनानर्थहेतुत्वमिति योजना । तथा च तेषामनुष्ठानस्य स्वतः पुरुषार्थत्वेऽपि क्रत्वनुष्ठानकालेऽपुरुषार्थत्वात्तत्र तेषामनुष्ठानस्य भवत्यनर्थहेतुत्वमितिभावः । तस्येति । क्रतौ स्वस्त्रीगमनादेरित्यर्थः । क्रतौ स्वस्त्रीगमनादेः कलञ्जभक्षणादिवदनर्थरूपनरकादिदुःखाहेतुत्वेऽपि क्रतुवैगुण्यसंपादकत्वेनानर्थहेतुत्वसंभवाद्भवत्यत्रापि निषिध्यमानस्यानर्थहेतुत्वमिति भावः । तस्मान्निषेधवाक्यानामनर्थहेतुक्रियानिवृत्तिजनकत्वेनैव पुरुषार्थानुबन्धित्वमिति सिद्धम् ।

यहाँ अन्य विकल्पों से इस विकल्प का अन्तर बतलाया जा रहा है जिसमें विकल्प-प्रसक्ति होने पर भी नञर्थ का प्रत्ययार्थ से सम्बन्ध होता ही है—जैसे 'अतिरात्रे षोडशिनं गृह्णाति' और 'नातिरात्रे षोडशिनं गृह्णाति में। यहाँ षोडशी-ग्रहण का प्रतिषेध हो रहा है, किन्तु प्रतिषेध इस लिये नहीं हो रहा है कि यदि उसे न किया गया तो अनर्थ हो जायेगा, जैसा 'न कलञ्जं भक्षयेत्' में होता है। कलञ्जभक्षण का निषेध पुरुषार्थ है, पुरुष का इष्ट है, क्योंकि यदि वह नहीं माना, कलञ्ज का भक्षण कर ही लिया तो उसका मरण भी हो सकता है। 'नातिरात्रे षोडशिनं गृह्णाति' में यह बात नहीं है, यहाँ जो विकल्प की स्थिति है उसमें षोडशी का ग्रहण विहित भी है और निषिद्ध भी, जो चाहे करे, जो चाहे न करे, न करने वाले को कोई दोष नहीं होगा, क्योंकि विकल्प में अदृष्टद्वय की कल्पना होती है। सम्पादन करने पर भी एक अदृष्ट–अपूर्व–बनता है और सम्पादन न करने पर भी एक अदृष्ट बनता है। इन दोनों प्रकार के अदृष्टों से इष्ट की सिद्धि ही होती है, कोई अनर्थ नहीं होता। दोनों अदृष्ट पुरुषार्थ हैं। जहाँ विकल्प नहीं होता है प्राप्ति रागतः होती है और निषेध शास्त्रतः होता है, वहाँ निषेधार्थ ही पुरुषार्थ होता है, रागतः प्राप्ति नहीं। उस दशा में निषेध्य का परित्याग न करना अनर्थ का कारण बनता है।

'न कलञ्जं भक्षयेत्' में यही स्थिति है। कलञ्जभक्षण रागतः प्राप्त है जिसका निषेध शास्त्रवाक्य से हो रहा है। भक्षण के निषेध में ही यहाँ कल्याण है, अतः निषेध्य का परित्याग ही अभीष्ट होगा।

कहीं कहीं ऐसे भी प्रसङ्ग होते हैं जहाँ दैनन्दिन जीवन के कुछ कृत्य शास्त्रों में श्रेयस्कर कहे गये हैं, किन्तु दूसरे शास्त्रवाक्यों में उनका ही निषेध किया जाता है। अतः शास्त्र से प्राप्त का शास्त्र से निषेध होने पर विकल्प की आशङ्का होती है, किन्तु वस्तुतः वहाँ विकल्प होता नहीं। जो कर्म स्वरूपतः पुरुषार्थ है, जिनमें पुरुषार्थता का अभाव नहीं कहा जा सकता है, फिर भी जब दो निषेध्य हो जाते हैं उस निषेध्यावस्था में इनका सम्पादन अनर्थ का हेतु न होने पर भी याग में गुणहीनता ला सकता है, अतः उस परिस्थिति-विशेष में निषेध्य ही पुरुषार्थ होता है। 'दीक्षितो न ददाति न जुहोति'–यज्ञ के दीक्षित व्यक्ति को न दान देना चाहिये, न होम करना चाहिये, में दान देना और होम करना शास्त्रसम्मत कर्त्तव्य कर्म है। इनके निषेध में कोई पुरुषार्थ नहीं है। इनको करके साधारण व्यक्ति पुण्य का ही भागी बनता हैं अपुण्य का नहीं, किन्तु दीक्षित पुरुष के लिये इनका निषेध किया जा रहा है। यदि दीक्षित पुरुष इस निषेध्य कर्म का अनुष्ठान करेगा—दान-होम करेगा–तो अनर्थ का कारण बन सकता है। इसी प्रकार अपनी पत्नी के साथ भोग सामान्यतः शास्त्रतः निषिद्ध नहीं है, किन्तु यज्ञ आदि धार्मिक अनुष्ठान करने वाले के लिये इसका निषेध हैं। यह निषेध अनुष्ठान को ध्यान में रखकर किया जा रहा है, क्योंकि निषेध के अभाव में—अर्थात् निषिद्ध कर्म के सम्पादन से यज्ञ में वैगुण्य का सम्पादन हो जायेगा। यज्ञ के लिये अपेक्षित संयम एवं ब्रह्मचर्य के अभाव में उसमें कमी हो जायेगी। इस कमी से अभीष्ट की पूर्णतः सिद्धि संभव न होगी, अतः अनर्थ होगा।

## अर्थवादविभागः

### अर्थवादमीमांसा

**( ६४ ) प्राशस्त्यनिन्दान्यतरपरं वाक्यमर्थवादः। तस्य च लक्षणया प्रयोजनवदर्थपर्यवसानम्। तथा हि—अर्थवादवाक्यं हि स्वार्थप्रतिपादने प्रयोजनाभावाद्विधेयनिषेध्ययोः प्राशस्त्यनिन्दितत्वे लक्षणया प्रतिपादयति, स्वार्थमात्रपरत्वे आनर्थक्यप्रसङ्गात्। आम्नायस्य हि क्रियार्थत्वात्। न चेष्टापत्तिः। 'स्वाध्यायोऽध्येतव्यः' इत्यध्ययनविधिना सकलवेदाध्ययनं कर्तव्यमिति बोधयता सर्ववेदस्य प्रयोजनवदर्थपर्यवसायित्वं सूचयतोपात्तार्थत्वेनानर्थक्यानुपपत्तेः।**

प्रशंसा और निन्दा में से एक का प्रतिपादक वाक्य अर्थवाद है। उसका—अर्थवाद का–प्रयोजनवान् अर्थ में पर्यवसान लक्षणा से होता है। जैसे कि––अपने मुख्य अर्थ के प्रतिपादन में[1] प्रयोजन का अभाव होने से अर्थवाद वाक्य विधेय एवं निषेध्य पदार्थों की उत्कृष्टता और अपकृष्टता का प्रतिपादन लक्षण से कराता है। यदि अपने मुख्य अर्थमात्र का ज्ञापक होगा तो उसमें अनर्थकता की आपत्ति होगी, क्योंकि वेदों की सार्थकता क्रिया के प्रतिपादन में है। ( वेदवाक्यों की अनर्थकता ) अभीष्ट नहीं है, क्योंकि 'स्वाध्यायोऽध्येतव्यः' इस अध्ययन के विधायक वाक्य द्वारा 'सम्पूर्ण वेदों का अध्ययन करना चाहिये' यह बोध कराते हुये सम्पूर्ण वेदों का प्रयोजनवत् अर्थ-धर्म-में पर्यवसान सूचित किया जाता है, यही वेद का अर्थ मान्य होने से आनर्थक्य की उपपत्ति नहीं होती।

---

१. स्वार्थप्रतिपादने मुख्यार्थप्रतिपादने।

**इदानीं सर्वार्थवादसाधारण्येनार्थवादरूपवेदभागस्य लक्षणमाह—प्राशस्त्येति। ननु 'वायुर्वै क्षेपिष्ठा देवते'त्यादेरर्थवादवाक्यात् प्राशस्त्यादेरप्रतीयमानत्वान्न तस्य प्राशस्त्यादिपरत्वं ततश्चासंभाविलक्षणमिदमित्यत आह––तस्येति। तस्यार्थवादस्य लक्षणया प्राशस्त्य-निन्दान्यतरप्रतिपादकत्वसंभवेन नेदं लक्षणमसंभवीत्यर्थः। अर्थवादस्य फलवदर्थपर्यव-सानमेवोपपादयति—–तथा हीत्यादिना। अर्थवादवाक्यं कर्तुः प्राशस्त्यनिन्दितत्वे द्वे प्रतिपा-दयतीत्यन्वयः। नन्वर्थवादस्य स्वार्थमात्रपरत्वे कथमानर्थक्यप्रसङ्गो 'वायुर्वै क्षेपिष्ठे'त्यादे-रर्थवादवाक्यात् क्षिप्रगामिवायुदेवतारूपार्थस्य प्रतीयमानत्वादित्यत आह—आम्नायस्येति। समस्तवेदस्य क्रियाप्रतिपादकत्वस्वीकारेण नास्य सिद्धार्थप्रतिपादकस्य स्वार्थमात्रपरत्वे सार्थक्यमुपपद्यत इति भावः। अर्थवादवाक्यानामनर्थकत्वस्येष्टत्वमाशङ्क्य परिहरति––न चेत्यादिना।**

यहाँ वेद के पञ्चम भाग अर्थवाद का निरूपण प्रारम्भ हो रहा है। अप्राप्त के प्रापक, मुख्य-गौण आदि पदार्थों के बोधक विधिवाक्यों, अपूर्व, नियम और परिसंख्या के बोधक मन्त्रों, उद्भिद्, चित्रा आदि यागों के वाचक नामधेयों, और अनिष्ट के वारक निषेधवाक्यों के अतिरिक्त भी कुछ वेदवाक्य हैं। जिनसे निन्दा या प्रशंसा का बोध होता है। इनका अन्तर्भाव विधि, मन्त्र, नामधेय, और निषेध किसी में नहीं हो सकता, सबसे इसका स्वरूप पृथक् है।

अतः कर्मों के अनुष्ठान, द्रव्य, देवता आदि के ग्रहण से विशिष्ट उपकार होने के कारण उनका प्राशस्त्य वर्णित होता है और निषेध्यकर्मों के अनुष्ठान–निषिद्ध द्रव्य आदि के ग्रहण–से अपकार होने के कारण उनकी निन्दा होती है। प्राशस्त्य-वर्णन से प्रवृत्ति एवं निन्दा-वर्णन से निवृत्ति की प्रेरणा मिलती है। इस प्रयोजन की सिद्धि करने वाले वेदवाक्यों को अर्थवाद कहा जाता है। दूसरे शब्दों में यों समझना चाहिये कि विधेय की प्रशंसा और निषेध्य की निन्दा की जाती है।

अर्थवाद अर्थात् निन्दा या प्राशस्त्य सिद्ध अर्थ का होता है, उस विषय का होता है जो पहले से सम्पन्न हो गया होता है या पूर्वतः विद्यमान रहता है। विधेय और निषेध्य कर्म ऐसे होते हैं जिनको भविष्य में सम्पन्न होना रहता है। विधिवाक्यों से ज्ञात प्रतिपाद्य यागादि कर्म और निषेध वाक्य से ज्ञात निषेध्य कलञ्जभक्षण आदि ही प्रयोजनवद् अर्थ हैं।[1] विधिवाक्यों का प्रयोजन है कल्याणकारी कर्मों में प्रवृत्त करा कर पुरुष के अभीष्ट स्वर्ग, पशु, पुत्र आदि की प्राप्ति कराना, और निषेधवाक्यों का प्रयोजन है अकल्याणकारी ब्रह्महत्या, कलञ्जभक्षण आदि से निवृत्त करा कर पुरुष के अनिष्ट नरक, मरण आदि से मुक्त कराना। ऐसी अवस्था में स्पष्ट है कि सिद्ध अर्थों से सम्बद्ध अर्थवाद वाक्यों की भविष्य में साध्य एवं निषेध्य कर्मों की सङ्गति नहीं हो सकती। सिद्ध अर्थ का प्रतिपादन करना मीमांसा के अनुसार वेद का लक्ष्य नहीं है। लक्ष्य का साधन न होने से अर्थवाद वाक्यों की अनर्थकता सिद्ध होगी, क्योंकि मीमांसादर्शन के अनुसार सम्पूर्ण आम्नाय–समस्त वेदवाक्य की सार्थकता साध्य क्रिया के प्रतिपादन में ही है। जिन वाक्यों में क्रियार्थकता नहीं है उनको व्यर्थ समझना चाहिये—'आम्नायस्य क्रियार्थत्वाद् आनर्थक्यम् अतदर्थानाम्।' यदि यह कहा जाये कि क्रिया का प्रतिपादन न करने वाले वाक्यों को निरर्थक मान लेने में कोई हानि है, तो यह तर्क मान्य नहीं है, क्योंकि 'स्वाध्यायोऽध्येतव्यः' इस विधिवाक्य से समस्त वेद का अध्ययन अपेक्षित है, और इसी से सिद्ध होता है कि सम्पूर्ण वेद का पढ़ना इसीलिये आवश्यक है क्योंकि उनसे किसी न किसी क्रियारूप प्रयोजन का सम्पादन होता है, अर्थात् कोई भी वाक्य निरर्थक नहीं है, अतः वेद-वाक्यों की निरर्थकता अभीष्ट नहीं है। जब कोई वेद वाक्य निरर्थक नहीं है, तब अर्थवाद को भी निरर्थक कैसे कहा जा सकता है?

१. प्रयोजवदर्थो विधिनिषेधप्रतिपाद्ययागादि–कलञ्जभक्षणनिवृत्यादिरूपः। प्रतिपादिका पृ. १५५

